उच्चतरमाध्यमिककक्षायाः पाठ्यक्रमः

# संस्कृतसाहित्यम् - ३४८

## पुस्तकम् - २


**राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्**

ए-२४-२५, संस्थागतक्षेत्रम् , विभागः - ६२

नोएडा - २०१ ३०९ (उत्तरप्रदेशः)

जालपुटकूटम् - www.nios.ac.in  निर्मूल्यः दूरभाषः - १८००१८०९३९३

**National Institute of Open Schooling**

A-२४-२५, Institutional Area, Sector – ६२

NOIDA – २०१ ३०९ (UP)

# उच्चतरमाध्यमिककक्षा - संस्कृतसाहित्यम् (३४८)

## मन्त्रणामण्डलम्

**आचार्यः चन्द्र-भूषण-शर्मा**
अध्यक्षः
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९

**श्री संजय-कुमार-सिन्हा**
निदेशकः (शैक्षिक)
रा.मु.वि.शि.संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९

**डॉ. सन्ध्या-कुमारः**
उपनिदेशकः (शैक्षिक)
रा.मु.वि.शि.संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९

## पाठ्यविषय-निर्मिति-समितिः

**समितेः अध्यक्षः**
**स्वामी आत्मप्रियानन्दः**
कुलपतिः
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
बेलुड-मठः, हावडा - ७११ २०२ (प.वङ्गम्)

**समितेः उपाध्यक्षः**
**डॉ. वेंकटरमणभट्टः**
सहायकप्राध्यापकः (संस्कृताध्ययनविभागः)
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
बेलुड-मठः, हावडा - ७११ २०२ (प.वङ्गम्)

**डॉ. शशी-प्रभा-कुमारः**
प्राध्यापिका (संस्कृताध्यनविशेषकेन्द्रम्)
जवाहरलाल-नेहरू-विश्वविद्यालयः, नवदेहली

**श्रीमान् सन्तुकुमारपानः**
सहायकप्राध्यापकः (संस्कृतविभागः)
विजयनारायण-महाविद्यालयः, इटाचुना
मण्डलम् - हुगली - ७१२१४७ (प.वङ्गम्)

**डॉ. भास्करानन्द-पाण्डेयः**
उपप्राचार्यचरः
सर्वोदय-बाल-विद्यालयः, नवदेहली

**श्रीमान् पलाश-घोडइः**
सहायकप्राध्यापकः (संस्कृतविभागः)
राजा-नरेन्द्र-लाल-खान-महिला-महाविद्यालयः
मण्डलम् - पश्चिममेदिनीपुरम् - ७२११०२ (प.वङ्गम्)

**श्रीमान् मलय-पोडे**
सहायकप्राध्यापकः (W.B.E.S) (संस्कृतविभागः)
राणीबाँध-सर्वकारीय-महाविद्यालयः
स्थानम्- राणीबाँध, मण्डलम्- बाँकुडा- ७२२१३५(प.वङ्गम्)

**स्वामी वेदतत्त्वानन्दः**
प्राचार्यः
रामकृष्ण-मठ-विवेकानन्द-वेद-विद्यालयः
बेलुड-मठः, मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

**डॉ. राम-नारायण-मीणा**
सहायक-निदेशकः (शैक्षिक)
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्, नोएडा - २०१ ३०९

## पाठ्यक्रम-समन्वयकः

**डॉ. राम-नारायण-मीणा**
सहायक-निदेशकः (शैक्षिक)
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम् , नोएडा, उत्तरप्रदेशः - २०१ ३०९

# पाठ्यविषयसामग्री-निर्मिति-समितिः

## संपादकमण्डलम्

**डॉ. वेंकटरमणभट्टः**
सहायकप्राध्यापकः (संस्कृताध्ययनविभागः)
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
बेलुड-मठः, हावडा - ७११ २०२ (प.वङ्गम्)

**स्वामी वेदतत्त्वानन्दः**
प्राचार्यः
रामकृष्ण-मठ-विवेकानन्द-वेद-विद्यालयः
बेलुड-मठः, मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

## पाठलेखकाः

**(पाठः १, २०-२६)**
**श्रीमान् विष्णुपदपालः**
अनुसन्धाता (संस्कृताध्ययनविभागः)
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

**(पाठः २-७)**
**श्रीमान् सन्तुकुमारपानः**
सहायकप्राध्यापकः (संस्कृतविभागः)
विजयनारायण-महाविद्यालयः
पत्रालयः - इटाचुना
मण्डलम् - हुगली - ७१२१४७ (प.वङ्गम्)

**(पाठः ८-१९)**
**श्रीमान् मलय-पोडे**
सहायकप्राध्यापकः (W.B.E.S)
(संस्कृतविभागः)
राणीबाँध-सर्वकारीय-महाविद्यालयः
स्थानम् - राणीबाँध, मण्डलम् - बाँकुडा - ७२२१३५
पश्चिमवङ्गम्

**(पाठः २७)**
**डॉ. वेंकटरमणभट्टः**
सहायकप्राध्यापकः
संस्कृताध्ययनविभागः
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
बेलुड-मठः, हावडा - ७११ २०२ (प.वङ्गम्)

## रेखाचित्राङ्कनं मुखपृष्ठचित्रणं च

**स्वामी हररूपानन्दः**
रामकृष्ण-मिशन्
बेलुड-मठः
मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

## अध्यक्षीयः सन्देशः

प्रिय विद्यार्थिन्

'भारतीयज्ञानपरम्परा' इति पाठ्यक्रमस्य अध्ययनाय अध्येत्रे हार्दं स्वागतं व्याह्रियते।

भारतम् अति प्राचीनम् अति विशालं च। भारतस्य वाङ्मयमपि तथैव प्राचीनं प्रशस्यतरं सुमहत् च। सृष्टिकर्ता भगवान् एव भारतीयानां सकलविद्यानाम् उत्स इति सिद्धान्तः शास्त्रेषु। भारतस्य सुज्ञाते अल्पज्ञाते अज्ञाते च इतिहासे वाग्विनिमयस्य माध्यमं संस्कृतमिति सुविदितं समेषाम्। प्रदीर्घे अस्मिन् भारतेतिहासे यानि शास्त्राणि समुद्भूतानि, यत् चिन्तनं प्रावर्तत, ये भावाः प्रकटिताः तत्सर्वमपि संस्कृतभाषाभाण्डारे निबद्धमस्ति। अस्य भाण्डारस्य आकारः कियान्, तलः कियान् गभीरः, मूल्यं कियद् अधिकम् इति निर्धारणे न कोऽपि समर्थः। पुरा किं किं पठन्ति स्म भारतीया इति एकेन श्लोकेन कथञ्चित् संक्षिप्य प्रकट्यते -

**अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।**
**पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश।। (वायुपुराणम् ६१.७८)**

अस्मिन् श्लोके चतुर्दश विद्यास्थानानि कथ्यन्ते। चत्वारो वेदाः (उपवेदाः च) षड् वेदाङ्गानि मीमांसा (पूर्वोत्तरमीमांसे) न्यायः (आन्वीक्षिकी) पुराणम् (अष्टादश मुख्यानि पुराणानि, उपपुराणानि च) धर्मशास्त्रम् (स्मृतिः) इति चतुर्दश विद्यास्थानानि कथ्यन्ते। इतोऽपि काव्यादीनि बहूनि शास्त्राणि सन्ति। एतासां विद्यानाम् उत्सः प्रवाहः प्रदानं प्रगतिः प्रवृद्धिः च महता कालेन जाता। समाजस्य कल्याणाय भारतस्य पाठदानपरम्परायां गुरुकुलेषु आध्यात्मिका मनोवैज्ञानिका शरीरारोग्यविषया राजनीतिः दण्डनीतिः काव्यानि काव्यशास्त्राणि अन्यानि च बहूनि शास्त्राणि पाठ्यन्ते पठ्यन्ते स्म।

एतासाम् विद्यानां शिक्षणाय बटुः पितृगृहं त्यक्त्वा गुरुकुलेषु ब्रह्मचर्याश्रमं यापयति स्म। एतासु निष्पाणो भवति स्म। एतासु विद्यासु निष्णाता जना अद्यापि केचित् सन्ति। नैसर्गिकपरिवर्तनानि परदेशीयानि आक्रमणानि स्वदेशीया विप्लवाः इत्यादिभिः बहुभिः कारणैः एता विद्या यथापूर्वं न पाठ्यन्ते भारते। अपिच ये केऽपि पठन्ति तेषां पाठ्यक्रमः परीक्षा प्रमाणपत्रम् इत्यादिकम् आधुनिकशिक्षणपद्धत्या क्वचित् राज्येषु भवति, बहुत्र नैव भवति। अतः एतेषां प्राचीनशास्त्राणाम् अध्ययनं परीक्षणं प्रमाणीकरणं च भवतु इति धिया अयं पाठ्यक्रमः राष्ट्रियमुक्तविद्यालयीशिक्षासंस्थानेन प्रारब्धः। जनहिताकारि यद् यावद् यथा च ज्ञानं एतेषु शास्त्रेषु निहितं निभृतम् चास्ति तद् जनानां पुरस्तात् प्रकटितं भवतु इति लक्ष्यम्। तेन सर्वेऽत्र सुखिनः सन्तु, सर्वे सन्तु निरामयाः, सर्वे भद्रदृष्टिसम्पना भूत्वा भद्राणि पश्यन्तु, मा कश्चिद् दुःखम् आप्नुयात्, मा कश्चिद् दुःखदाने प्रवर्तेत इति अत्यन्तम् उदारम् उद्देश्यम् 'भारतीयज्ञानपरम्परा' इति नामकस्य अस्य पाठ्यक्रमस्य प्रकल्पने वर्तते। विज्ञानं शरीरारोग्यं चिन्तयति। कलाविषया मनोविज्ञानम् आध्यात्मिकविज्ञानं मनोरञ्जनं च चिन्तयन्ति। विज्ञानं साधनस्वरूपं सुखोपभोगः साध्यं चास्ति। अतः विज्ञानादपि कलाशाखायाः श्रेष्ठत्वं निःसन्देहमस्ति। जनः कलाम् उपयुज्य विज्ञानात् सुखम् नाप्नोति। अपि तु विज्ञानम् उपयुज्य कलातः सुखमाप्नोति। नात्र व्यतिक्रमः परिलक्ष्यते।

अयं संस्कृतसाहित्यस्य पाठ्यक्रमः छात्रानुकूलो ज्ञानवर्धको लक्ष्यसाधकः पुरुषार्थसाधकश्च अस्ति इति विश्वसिमि।

अस्य पाठ्यक्रमस्य निर्माणे ये हिताभिलाषिणो विद्वांसः उपदेष्टारः पाठलेखकाः त्रुटिसंशोधकाः टङ्कायोजकाः च साक्षात् परोक्षरूपेण वा साहाय्यं कृतवन्तः, तेभ्यः संस्थानपक्षतो हार्दिकं कार्तज्ञ्यं व्याह्रियते। रामकृष्णमिशन्-विवेकानन्द-विश्वविद्यालयस्य कुलपतिवर्याः श्रीमन्तः स्वामिन आत्मप्रियानन्दाः विशेषतो धन्यवादार्हा येषाम् आनुकूल्यं प्रेरणां च विना कार्यस्यास्य परिसमाप्तिः दुष्करा एव।

अस्य पाठ्यक्रमस्य अध्येतारो धन्या भवन्तु, सफला भवन्तु, विद्वांसो भवन्तु, सज्जना भवन्तु, देशभक्ता भवन्तु, समाजसेवका भवन्तु इति अति हार्दा सदिच्छा अस्माकम्।

डॉ. चन्द्रभूषणशर्मा
अध्यक्षः
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्

## निदेशकीया वाक्

प्रिय अध्येतः

'भारतीयज्ञानपरम्परा' इति पाठ्यक्रमं पठितुम् उत्साहिभ्यो भारतीयज्ञानपरम्पराया अनुरागिभ्य उपासकेभ्यश्च हार्दिकं स्वागतं विज्ञाप्यते। परमहर्षविषयः अयं यद् गुरुकुलेषु अधीयाना विषया अस्माकं राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानस्य पाठ्यक्रमेऽपि समाविष्टा भवन्ति। आ बहोः कालाद् विद्यमानः अन्तरायो दूरीभवेदिति आशासे। हिन्दुजैनबौद्धानां धर्मिकम् आध्यात्मिकं काव्यादिकं च वाङ्मयं प्रायः सर्वमपि संस्कृते निबद्धमस्ति। एतेषां शतस्य कोटीनां मनुजानां प्रियाणाम् विषयाणाम् भूमिकायै प्रस्तुत्यै प्रवेशयोग्यतायै प्रोचनायै च माध्यमिकस्तरे उच्चमाध्यमिकस्तरे च केचिद् विषयाः पाठ्यत्वेन योज्यन्ते। यथा आंग्ल-हिन्द्यादिभाषाज्ञानं विना तत्तद्भाषया लिखिता माध्यमिकस्तरीया ग्रन्थाः पठितुं बोद्धुं च न शक्यन्ते तद्वत् अत्रापि प्रारम्भिकं संस्कृतं न जानाति चेत् इमं पाठ्यक्रमं बोद्धुं न पारयेत्। अतः प्रारम्भिकं संस्कृतं विद्वान् छात्रः अत्र अस्य पाठ्यक्रमस्य अध्ययने अधिकारित्वेन इति गण्यते।

गुरुकुलेषु अधीयानाः छात्रा अष्टमकक्षां यावत् कामं स्वपरम्परानुसारम् अध्ययनं करोतु। नवमदशमकक्षयोः तु एकादशद्वादशकक्षयोः च भारतीयज्ञानपरम्परा इति पाठ्यक्रमस्य निष्ठया नियमितम् अध्ययनं करोतु। अस्य पाठ्यक्रमस्य अध्येता उच्चशिक्षायै योग्यो भविष्यति।

संस्कृतस्य विभिन्नेषु शास्त्रेषु कृतभूरिपरिश्रमाः विद्वांसः प्राध्यापकाः शिक्षकाः शिक्षाविदः च अस्य पाठ्यक्रमस्य प्रारूपरचनायाम् विषयनिर्धारणे विषयपरिमाणनिर्धारणे विषयप्रकटनभाषास्तरनिर्णये विषयपाठलेखने च संलग्नाः। अतः अस्य पाठ्यक्रमस्य स्तरः उन्नत एव इति किम् उ वक्तव्यम्।

संस्कृतसाहित्यस्य एषा स्वाध्यायसामग्री भवतां कृते पर्याप्ता सुबोधा रुचिरा आनन्दरसस्यन्दिनी सौभाग्यदायिनी धर्मार्थकाममोक्षोपयोगिनी च स्यादिति आशास्महे। अस्य पाठ्यक्रमस्य प्रधानं लक्ष्यं यद् भारतीयज्ञानपरम्परायाः शैक्षणिकक्षेत्रेषु विशिष्टं योग्यं च स्थानं स्वीकृतिः गवेषणा च स्यादिति। तल्लक्ष्यम् पाठ्यक्रमेणानेन सेत्स्यति इति दृढविश्वासिनो वयम्।

अध्येता अध्ययनकाले यदि मन्येत यद् अस्मिन् अध्ययनसम्भारे पाठनिचये यत्र संशोधनं परिवर्तनं परिवर्धनं संस्कारः च अपेक्ष्यन्ते, तेषां समेषां प्रस्तावानां वयं स्वागतं कर्तुं सिद्धाः स्मः। अमुं पाठ्यक्रमम् इतोऽपि अधिकम् प्रभाविनम् उपयोगिनं सरलं च विधातुं भवद्भिः सह वयं सदा प्रयत्नपरा एव।

अध्येतॄणां समेषामपि अध्ययने साफल्याय जीवने च साफल्याय कृतकृत्यायै च आशीर्वचः अस्माकम्।

किं बाहुना विस्तरेण। अस्माकं गौरववाणीं जगति विरलाम् सर्वविद्याया लक्ष्यभूताम् एव उद्धरामि -

**सर्वेऽत्र सुखिनः सन्तु सर्वे सन्तु निरामयाः।**
**सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग् भवेत्।।**
**दुर्जनः सज्जनो भूयात् सज्जनः शान्तिमाप्नुयात्।**
**शान्तो मुच्येत बन्धेभ्यो मुक्तश्चान्यान् विमोचयेत्।।**
**स्वस्त्यस्तु विश्वस्य खलः प्रसीदतां ध्यायन्तु भूतानि शिवं मिथो धिया।**
**मनश्च भद्रं भजतादधोक्षजे आवेश्यतां नो मतिरप्यहैतुकी।।**

श्री संजय-कुमार-सिन्हा
निदेशकः (शैक्षिकम्)
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्

## समन्वयकीयानि वचांसि

प्रिय जिज्ञासो

**ॐ सह नाववतु। सह नौ भुनक्तु। सह वीर्यं करवावहै। तेजस्विनावधीतमस्तु। मा विद्विषावहै॥ ॐ शान्तिः शान्तिः शान्तिः॥**

परम्पराम् अवलम्ब्य इयं प्रार्थना यद् अस्माकम् अध्ययनं विघ्नरहितं भवतु। अज्ञाननाशकं तेजस्वि भवतु। विद्वेषभावनानाशकं भवतु। विद्यालाभेन सर्वविधतापानां शान्तिः भवतु इति।

भारतीयज्ञानपरम्परा इति पाठ्यक्रमस्य अङ्गभूतोऽयं पाठ्यविषयः। अस्य उच्चतरमाध्यमिककक्षायाः कृते निर्धारणमस्ति। एतत्पाठ्यक्रमस्य पाठनिचयात्मिकाम् इमाम् अध्ययनसामग्रीम् भवते ददद् अहं परमं हर्षम् अनुभवामि। सरलं संस्कृतं जानन् यः कोऽपि अस्य अध्ययने समर्थो गण्यते।

काव्यस्य काव्यशास्त्रस्य च परमं फलम् भवति रसः इति विदुषाम् अभिप्रायः अनुभवश्च समेषाम्। आनन्दो हि रसस्वरूपम्। सर्वेषाम् प्राणिनाम् सर्वं कार्यम् आनन्दे सुखे वा पर्यवस्यतु इतीच्छा सर्वप्रबला। तथा काव्यस्य सर्वे विषयाः रसे पर्यवस्यन्ति। काव्यानां नैके प्रकाराः सन्ति। काव्यप्रपञ्चः च अति महान्। बहूनि च काव्यानि सन्ति। तेषु विविधानां काव्यांशानां चयनं कृत्वा अत्र पाठ्यत्वेन योजना कृता। एवञ्च ईदृक् रसस्यन्दीनि काव्यानि ये रचयतन्ति ते प्रतिभाशालिनः कवयः के इति तत्परिचयः भविष्यति। येन केनापि यत् किमपि लिखितं चेत् काव्यं न भवति। तस्य नियमाः सन्ति। ते च नियमाः काव्यशास्त्रे अन्तर्भवन्ति। नियमनिर्णायकाः अलंकारिकाः के इति तत्परिचयः अत्र स्यात्। तत्कृता नियमाश्च के इति सविस्तरं विषयः अत्र कावदर्पणः इति नाम्ना प्रकटितोऽस्ति। पारम्परिकगुरुकुलेषु यया पद्धत्या पाठः प्रदीयते तस्य अवलम्बः यथासम्भवमत्र प्रतिपादने कृतो विद्यते।

उच्चतरमाध्यमिककक्षायां प्रदत्तः संस्कृतसाहित्यम् इति विषयः अपि अत्यन्तम् उपकारकः वर्तते। छात्रः अस्य अध्ययनेन ज्ञानपीनः आनन्दाप्लुतः च भवेत्। अस्य पठनेन अध्येता अन्येषु काव्येषु प्रवेशाय योग्यो विधास्यते। एतत्सामग्री काव्यानां काव्यशास्त्रस्य च सश्रद्धम् अध्ययने प्रवेशाय प्ररोचनाय च। अनया आकरग्रन्था न गतार्था न वा हेयाः अपि तु गभीरतया अध्येयाः।

समग्रोऽपि पाठ्यविषयः त्रिषु पुस्तकेषु कल्पितोऽस्ति।

अध्येता पाठान् सम्यक् पठित्वा पाठगतानां प्रश्नानाम् उत्तराणि स्वयं विचार्य अन्ते प्रदत्तानाम् उत्तराणां दर्शनं कुर्यात्, तैः उत्तरैः स्वस्य उत्तरं च मेलयेद्। प्रतिपत्रं प्रदत्ते रिक्तभागे स्वस्य टिप्पणीं रचयेद्। पाठान्ते प्रदत्तानाम् उत्तराणि निर्माय परीक्षायै सन्नद्धो भवतु।

अध्ययनसम्भारे क्वापि काठिन्यम् अनुभूयते चेत् अध्ययनकेन्द्रं यथाकालं गत्वा समस्यासमाधानाय आचार्यं पश्यतु। राष्ट्रियमुक्तविद्यालयीशिक्षासंस्थानेन सह ई-पत्रद्वारा सम्पर्कं वा करोतु। जालपुटे अपि संपर्कव्यवस्था वर्तत एव। जालपुटकुटः www.nios.ac.in इति अस्ति।

पाठ्यविषयोऽयं भवतः ज्ञानं वर्धयतात् , परीक्षासु साफल्यम् आवहतात् , रुचिं वर्धयतात् , मनोरथान् पूरयतात् इति कामये।

अज्ञानान्धकारस्य नाशाय ज्ञानज्योतिषः दर्शनाय च इयं मे हार्दिकी प्रार्थना -

**ॐ असतो मा सद् गमय। तमसो मा ज्योतिर्गमय। मृत्योर्मामृतं गमय॥ ॐ शान्तिः शान्तिः शान्तिः॥**

भवत्कल्याणकामी
राम-नारायण-मीणा
पाठ्यक्रमसमन्वयकः (शैक्षिकम्)
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्

# पुस्तकम्- १

## कविपरिचयः

१. कविपरिचयः- १

२. कविपरिचयः- २

३. कविपरिचयः- ३

## काव्याध्ययनम् - १

## रघुवंशम् (प्रथमसर्गे १-४८ श्लोकाः)

४. रघुवंशम् - रघुवंशीयनृपाणां गुणवर्णनम्

५. रघुवंशम् - राज्ञो दिलीपस्य गुणवर्णनम्- १

६. रघुवंशम् - राज्ञो दिलीपस्य गुणवर्णनम्- २

७. रघुवंशम् - वशिष्ठाश्रमे गमनम्

## स्तोत्रसाहित्यम्

८. मोहमुद्गरः रामगुणकीर्तनं च

## गद्यकाव्यम्

९. शिवराजविजयः - बटुसंवादः

१०. शिवराजविजयः - योगिराजसंवादः

११. शिवराजविजयः - यवनदुराचारः

# पुस्तकम्- २

## काव्याध्ययनम् - २

## उत्तररामचरितम् (प्रथमोऽङ्कः)

१२. उत्तररामचरितम् - प्रस्तावना

१३. उत्तररामचरितम् - अष्टावक्रसंवादः

१४. उत्तररामचरितम् - चित्रदर्शनम् - १

१५. उत्तररामचरितम् - चित्रदर्शनम् - २

## शुकनासोपदेशः

१६. शुकनासोपदेशः - यौवनस्वभावः

१७. शुकनासोपदेशः - लक्ष्मीचापल्यम्

१८. शुकनासोपदेशः - लक्ष्मीदुष्प्रभावः-१

१९. शुकनासोपदेशः - लक्ष्मीदुष्प्रभावः-२

# पुस्तकम्- ३

## काव्यदर्पणः

२०. अलंकारिकपरिचयः -१

२१. अलंकारिकपरिचयः -२

२२. वृत्तिः

२३. छन्दसां मात्रागणयतिभेदाः

२४. छन्दांसि

२५. अलंकारः -१

२६. अलंकारः -२

२७. रसः

# संस्कृतसाहित्यम्

# उच्चतरमाध्यमिककक्षा

## द्वितीयं पर्व

# उत्तररामचरितम्

## भूमिका

संस्कृतनाट्यसाहित्ये भवभूतिः अतीव प्रसिद्धः नाट्यकारः। महाकवेः कालिदासस्य इव अस्य देशकालकृतिविषये अस्पष्टता नास्ति। अयं कविः सप्तशततमे ईशवीयाब्दे दक्षिणभारतस्य पद्मपुरनामकनगरवास्तव्य आसीत्। अनेन मालतीमाधवम्, महावीरचरितम् उत्तररामचरितम् इति त्रयः नाट्यग्रन्थाः रचिताः इति सर्वे अङ्गीकुर्वन्ति। तेषु उत्तररामचरितं नाम नाटकं भवभूतेः सर्वोत्कृष्टं दानं मन्यन्ते विद्वांसः। अत एवोक्तिः प्रसिद्धा - "उत्तररामचरिते भवभूतिर्विशिष्यते" इति। अत्र रामायणस्य उत्तरार्धं वर्णितम्। नाटकमिदं सप्ताङ्कात्मकं वर्तते।

लङ्कायाः महारणे भगवता श्रीरामेण राक्षसकुलेशं रावणं निहत्य धर्मपत्नी जनकसुता सीता अशोकवनात् उद्धृता। ततः वनवासं समाप्य रामः सीतया लक्ष्मणेन च सह अयोध्यां प्रत्यागतः। अयोध्याम् आगत्य केषुचिद् दिवसेषु एव रामस्य राज्याभिषेकः सम्पन्नः। ततः आरभ्य सीतया सह विच्छेदः पुत्रयोः लवकुशयोः जन्म सीतया सह पुनर्मिलनपर्यन्तं नाटकमिदं परिव्याप्तम्। वृत्तान्तवर्णनकाले कानिचन काल्पनिकघटनानि अपि आश्रितानि कविना। नाटकस्य प्रारम्भः भवति चित्रदर्शनात् यत्र श्रीरामः लक्ष्मणः सीता च अर्जुननामकेन चित्रकारेण चित्रितं रामचरितात्मकं चित्रपटं पश्यन्ति। किञ्च, चित्राणि अवलोक्य तेषां व्यतीतानां दिवसानां विषये स्वाभिमतं प्रकाशयन्ति। ततः क्रमशः वृत्तान्ताः सम्मुखम् आगच्छन्ति। रामस्य राज्याभिषेकं निरीक्षितुम् आगतः दुर्मुखनामकः गुप्तचरः लङ्कायां सीतावासकारणात् सञ्जातां लोकनिन्दां रामस्य पुरस्ताद् वर्णयति। ततः गर्भवती जानकी वनदर्शनस्य इच्छां प्रकटयति। लक्ष्मणः रामाज्ञया तां वनदर्शनव्याजेन वाल्मीकिमहर्षेः आश्रमे परित्यज्य आगच्छति। मुनेः आश्रमे सीतायाः द्वौ पुत्रौ जन्म लभेते। अश्वमेधयज्ञस्य दिग्विजयकाले वाल्मीक्याश्रमं प्रति गतं श्रीरामं तस्य द्वाभ्यां पुत्राभ्यां सह साक्षात्कारयति महर्षिः वाल्मीकिः। ततः च मुनिः देवीं सीतां रामाय समर्पयति। एवं उत्तररामचरितनाटकं समाप्यते।

# १२

# उत्तररामचरितम् - प्रस्तावना

## प्रस्तावना

अस्मिन् ग्रन्थे वयं नाटकस्य प्रथमाङ्कस्य आदितः कांश्चन अंशान् पठामः। प्रथमतः सूत्रधारः नटः च मञ्चम् आगत्य नाटकस्य प्रस्तावनां करोति। रामः जनकविरहेण परिखिन्नां सीतां सान्त्वयितुं सिंहासनाद् उत्थाय अन्तःपुरं गच्छति। ततः अष्टावक्रः आगत्य तयोः कुशलसंवादं पृच्छति। किञ्च वसिष्ठादिभिः गुरुजनैः रामाय ये उपदेशाः प्रदत्ताः तत्सर्वं रामः श्रावयति। तदनन्तरं लक्ष्मणः आगत्य कथयति यत् रामचरितात्मकं चित्रं ताभ्यां यथा आदिष्टम् आसीत् तथा एव अङ्कणं सम्पाद्य चित्रकारः आगतः। तदनु रामः सीतायाः विनोदाय तं चित्रपटं सीतायै प्रदर्शयति। एवं चित्रदर्शनपर्व आरभ्यते। तस्मिन् तारकाराक्षसीवधात् आरभ्य रामसीतयोः विवाहः, वनवासगमनम्, शृङ्गवेरपुरम् इत्येवं घटनाक्रमेण विन्ध्यारण्यस्य चित्रम् आगच्छति। अन्ते राममुखेन गोदावर्याः तस्याः तटे च तेषां जीवनपद्धतेः वर्णनेन ग्रन्थसमाप्तिः भवति।

अस्मिन् पाठे वयम् उत्तररामचरितस्य नाटकस्य प्रस्तावनां पठामः। अत्र सप्त श्लोकाः काश्चन उक्तयः वर्तन्ते। प्रथमतः सूत्रधारः आगत्य कवेः भवभूतेः वर्णनं करोति। तत्र सूत्रधारः अयोध्यावासी सन् नटेन सह मिलति। ततः नटसूत्रधारयोः मध्ये अयोध्यायाः विषये तस्याः निःशब्दतायाः विषये सुदीर्घः वार्तालापः प्रचलति। तद्वार्तालापप्रसङ्गेन एव नाट्यस्य आरम्भः भवति। तत् कथम् इति पाठं पठित्वा एव ज्ञास्यामः।

## उद्देश्यानि

अमुम् पाठं पठित्वा भवान् -

- रामस्य सीतायाः चरितं जानीयात्।
- नाटके सूत्रधारनटयोः विषये ज्ञातुं समर्थः भवेत्।
- नान्दीविषये ज्ञातुं समर्थः भवेत्।
- छन्दसां लक्षणानि जानीयात्।
- श्लोकानाम् अन्वयं प्रतिपदार्थादिकं च अवगच्छेत्।
- दीर्घानां पदानां विग्रहवाक्यं समासं च बोद्धुं समर्थः भवेत्।

## १२.१) सम्पूर्णः मूलपाठः

इदं कविभ्यः पूर्वेभ्यो नमोवाकं प्रशास्महे।
विन्देम देवतां वाचममृतामात्मनः कलाम्॥१॥

(नान्द्यन्ते)

सूत्रधारः - अलमतिविस्तरेण। अद्य खलु भगवतः कालप्रियानाथस्य यात्रायामार्यमिश्रान् विज्ञापयामि। एवमत्रभवन्तो विदांकुर्वन्तु। अस्ति खलु तत्रभवान् काश्यपः श्रीकण्ठपदलाञ्छनः पदवाक्यप्रमाणज्ञो भवभूतिर्नाम जातूकर्णीपुत्रः।

यं ब्रह्माणमियं देवी वाग्वश्येवानुवर्तते।
उत्तरं रामचरितं तत्प्रणीतं प्रयोक्ष्यते।।२।।

सूत्रधारः - एषोऽस्मि कार्यवशादायोध्यकस्तदानींतनश्च संवृत्तः (समन्तादवलोक्य) भोः भोः! यदा तावदत्रभवतः पौलस्त्यकुलधूमकेतोः महाराजरामस्यायं पट्टाभिषेकसमयो रात्रिन्दिवमसंहृतानन्दनान्दीकः, तत्किमिदानीं विश्रान्तचारणानि चत्वरस्थानानि?

(प्रविश्य)

नटः - भाव ! प्रेषिता हि स्वगृहान्महाराजेन लङ्कासमरसुहृदो महात्मानः प्लवङ्गमराक्षसाः सभाजनोपस्थायिनश्च नानादिगन्तपावना ब्रह्मर्षयो राजर्षयश्च, यत्समाराधनायैतावतो दिवसान् प्रमोद आसीत्।

सूत्रधारः - आ, अस्त्येतन्निमित्तम्।

नटः - अन्यच्च -

वसिष्ठाधिष्ठिता देव्यो गता रामस्य मातरः।
अरुन्धतीं पुरस्कृत्य यज्ञे जामातुराश्रमम् ॥३॥

सूत्रधारः - वैदेशिकोऽस्मीति पृच्छामि। कः पुनर्जामाता ?

कन्यां दशरथो राजा शान्तां नाम व्यजीजनत्।
अपत्यकृतिकां राज्ञे रोमपादाय तां ददौ ॥४॥

विभाण्डकसुतस्तामृष्यश्रृङ्ग उपयेमे। तेन द्वादशवार्षिकं सत्रमारब्धम्। तदनुरोधात्कठोरगर्भा- मपि जानकीं विमुच्य गुरुजनस्तत्र यातः।

सूत्रधारः - तत्किमनेन ? एहि राजद्वारमेव स्वजातिसमयेनोपनिष्ठावः।

नटः - तेन हि निरूपयतु राज्ञः सुपरिशुद्धामुपस्थानस्तोत्रपद्धतिं भावः।

सूत्रधारः - मारिष,

सर्वथा व्यवहर्तव्यं कुतो ह्यवचनीयता।
यथा स्त्रीणां तथा वाचां साधुत्वे दुर्जनो जनः ॥ ५॥

नटः - अतिदुर्जन इति वक्तव्यम्।

देव्यामपि हि वैदेह्यां सापवादो यतो जनः।
रक्षोगृहस्थितिर्मूलमग्निशुद्धौ त्वनिश्चयः ॥ ६ ॥

सूत्रधारः - यदि पुनरियं किंवदन्ती महाराजं प्रति स्यन्देत ततः कष्टं स्यात्।

नटः - सर्वथा ऋषयो देवाश्च श्रेयो विधास्यन्ति। (परिक्रम्य) भो भोः क्वेदानीं महाराजः? (आकर्ण्य) एवं जनाः कथयन्ति -

स्नेहात्सभाजयितुमेत्य दिनान्यमूनि
नीत्वोत्सवेन जनकोऽद्य गतो विदेहान्।
देव्यास्ततो विमनसः परिसान्त्वनाय
धर्मासनाद्विशति वासगृहं नरेन्द्रः ॥७॥

(इति निष्क्रान्तौ)

(इति प्रस्तावना)

## १२.२) साम्प्रतं मूलपाठम् अवगच्छाम - १

इदं कविभ्यः पूर्वेभ्यो नमोवाकं प्रशास्महे।
विन्देम देवतां वाचममृतामात्मनः कलाम् ॥१॥

**अन्वयः -**

पूर्वेभ्यः कविभ्यः इदं नमोवाकं प्रशास्महे, आत्मनः अमृतां कलां देवतां वाचं विन्देम।

**अन्वयार्थः -**

पूर्वेभ्यः प्राचीनेभ्यः कविभ्यः व्यासवाल्मीकिकालिदासादिभ्यः काव्यकर्तृभ्यः नमोवाकं नमस्कारम् इदं मङ्गलाचरणात्मकं प्रशास्महे निर्दिशामः। आत्मनः ब्रह्मणः परमात्मनः अमृतां नित्यां कलाम् अंशभूतां देवतां देवीं वाचं वाणीं सरस्वतीं विन्देम लभेमहि प्रार्थयामहे।

**व्याख्यानम् -**

रङ्गविघ्नानां नाशाय रङ्गादौ मङ्गलम् आचरणीयं भवति। तदेव मङ्गलं नाट्यशास्त्रे नान्दी इति नाम्ना अभिधीयते। अतः महाकविः भवभूतिः अपि काव्यस्य आदौ नान्दीं करोति प्रस्तुतेन श्लोकेन। श्लोके अस्मिन् मङ्गलम् आशीर्वचनात्मकं वर्तते। अत्र पूर्ववर्तिनः व्यासवाल्मीक्यादीन् कवीन् कविः भवभूतिः नमःशब्दमुच्चार्य स्तौति। तेषां प्रसादात् भगवतः ब्रह्मणः अंशभूता वागधिष्ठात्री देवी सरस्वती अभीष्टा वर्तते। एवं कविना कृतस्य पूर्वकविवन्दनस्य फलं वाग्देव्याः लाभः। अर्थात् वाक् यथासमयं यथार्थं स्फुरतु इति कवेः आशयः।

**विशेषटिप्पणी -**

अत्र महाकविः भवभूतिः उत्तररामचरितरूपं नाटकं रचयितुकामः प्रारम्भे विघ्ननाशाय चिकीर्षितग्रन्थस्य परिसमाप्तये च शिष्टाचारपरिपालनात्मकं मङ्गलम् इदं कविभ्यः इत्यनेन श्लोकेन



विदधाति। मङ्गलं हि शिष्टाचारानुमितश्रुतिबोधितकर्तव्यताकं भवति। तच्च — आशीर्वादात्मकं वस्तुनिर्देशात्मकं नमस्कारात्मकं च भवति। अत्र नमस्कारात्मकं मङ्गलं विदधाति कविः।

अत्र मङ्गलश्लोकः नान्दी। नन्दयति आनन्दयति जनान् इति नान्दी। नाटके मङ्गलार्थम् आदौ विहितं पद्यं नान्दीत्युच्यते। तस्या लक्षणमुक्तं विश्वनाथेनसाहित्यदर्पणे -

आशीर्वचनसंयुक्ता स्तुतिर्यस्मात् प्रयुज्यते।

देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता।।

मङ्गल्यशङ्खचन्द्राब्जकोककैरवशंसिनी।

पदैर्युक्ता द्वादशभिरष्टाभिर्वा पदैरुत।।

अर्थात् देवब्राह्मणनृपाणां आशीर्वचनयुक्ता स्तुतिः यत्र वर्तते सा नान्दीति उच्यते। सा च नान्दी द्वादशपदा अष्टपदा वा भवति। इयं द्वादशपदा नान्दी।

**व्याकरणविमर्शः -**

१. नमोवाकम् - वच्धातोः क्विप्प्रत्यये वाक् इति रूपम्। तस्य वचनम् इत्यर्थः। नमः वाकः यस्मिन् स इति नमोवाक् इति बहुव्रीहिसमासः, तं नमोवाकम्।

२. प्रशास्महे - प्रपूर्वकात् इच्छार्थकात् शास्धातोः उत्तमपुरुषैकवचने रूपम्। प्रशास्महे इत्यस्य निर्दिशामः इत्यर्थः।

३. विन्देम - तौदादिकात् विद्-धातोः विधिलिङि उत्तमपुरुषैकवचने विन्देम इति रूपम्।

४. अमृताम् - अविद्यमानं मृतं मरणं यस्याः सा अमृता इति बहुव्रीहिसमासः, ताम् अमृताम्। मरणरहिताम् इत्यर्थः।

**छन्दः -**

अस्मिन् श्लोके अनुष्टुप्-छन्दः वर्तते। तस्य लक्षणं तावत् -

श्लोके षष्ठं गुरु ज्ञेयं सर्वत्र लघु पञ्चमम्।

द्विचतुष्पादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः।।

एकस्मिन् श्लोके चत्वारः पादाः भवन्ति। अनुष्टुप्छन्दसि प्रत्येकपादस्य षष्ठाक्षरं गुरु भवति पञ्चमाक्षरं च लघु भवति। सप्तमाक्षरं द्वितीयपादे चतुर्थपादे ह्रस्वं भवति, प्रथमपादे तृतीयपादे च दीर्घं भवति।

## पाठगतप्रश्नाः- १

१. कविः किम् इच्छति।

२. अनुष्टुप्छन्दसः लक्षणं लिखत।

३. नमोवाकम् इति रूपं साधयत।

## १२.३) साम्प्रतं मूलपाठम् अवगच्छाम - २

**(नान्द्यन्ते)**

**सूत्रधारः - अलमतिविस्तरेण। अद्य खलु भगवतः कालप्रियानाथस्य यात्रायामार्यमिश्रान् विज्ञापयामि। एवमत्रभवन्तो विदाङ्कुर्वन्तु - अस्ति खलु तत्रभवान् काश्यपः श्रीकण्ठपदलाञ्छनः पदवाक्यप्रमाणज्ञो भवभूतिर्नाम जातूकर्णीपुत्रः।**

### अन्वयार्थः -

(मङ्गलाचरणस्यान्ते) अलं पर्याप्तम् अतिविस्तरेण अधिकविस्तारेण। अद्य अस्मिन् दिने खलु भगवतः सर्वैश्वर्यविभूषितस्य कालप्रियानाथस्य दुर्गावल्लभस्य शिवस्य यात्रायां महोत्सवे आर्यमिश्रान् आर्यान् आदरणीयान् मिश्रान् पठितबहुशास्त्रान् अथवा गौरवितान् विज्ञापयामि सविनयं निवेदयामि एवम् इत्थम् अत्रभवन्तः अत्रोपस्थिताः पूज्याः भवन्तः विदाङ्कुर्वन्तु जानन्तु। तत्रभवान् अत्रानुपस्थितः पूज्यः श्रीमान् काश्यपः कश्यपगोत्रोत्पन्नः श्रीकण्ठपदलाञ्छनः श्रीकण्ठनामधेयः पदवाक्यप्रमाणज्ञो व्याकरणमीमांसान्याय-शास्त्रज्ञः भवभूतिर्नाम भवभूतिरिति नामधेयः जातूकर्णीपुत्रः जतुकर्णीगोत्रजायाः स्त्रियाः सुतः अस्ति भवति खलु।

### व्याख्यानम् -

नान्द्यन्ते सूत्रधारः वदति यत् अधिकविस्तारः मास्तु। ततः स भगवतः शिवस्य उत्सवम् उपलक्ष्य समुपस्थितान् सभ्यान् कवेः भवभूतेः विषये ज्ञापयति। स कथयति यत् कविः भवभूतिः काश्यपगोत्रजः वर्तते। श्रीकण्ठ इति तस्य अपरं नाम भवति। व्याकरणे न्याये मीमांसायां च सः अत्यन्तं निष्णातः। स हि जातूकर्ण्याः पुत्रः भवभूतिः।

### विशेषटिप्पणी -

"नान्द्यन्ते प्रविशति सूत्रधारः" इत्युक्तेः नान्दीपाठात्परमेव सूत्रधारस्य प्रवेशः। सूत्रं नाटकप्रयोगानुष्ठानं धारयति इति सूत्रधारः। साहित्यदर्पणे सूत्रधारलक्षणम् उक्तं -

नाट्योपकरणादीनि सूत्रमित्यभिधीयते।

सूत्रं धारयतीत्यर्थे सूत्रधारो निगद्यते।।

### व्याकरणविमर्शः -

१. विदाङ्कुर्वन्तु - ज्ञानार्थकात् विद्धातोः लोटि कृधातोः अनुप्रयोगे प्रथमपुरुषबहुवचने रूपम्। जानन्तु इति तदर्थः।

२. श्रीकण्ठपदलाञ्छनः- श्रीकण्ठ इति पदं लाञ्छनं यस्य स इति श्रीकण्ठपदलाञ्छनः श्रीकण्ठपदनामकः इत्यर्थः।

३. पदवाक्यप्रमाणज्ञः- जानाति इति ज्ञः। पदं (व्याकरणम्) च वाक्यं (न्यायः) प्रमाणं (मीमांसा) च इति पदवाक्यप्रमाणानि, तेषां ज्ञः इति पदवाक्यप्रमाणज्ञः।

४. कालप्रियानाथस्य – कालस्य प्रिया कालप्रिया इति षष्ठीतत्पुरुषसमासः। दुर्गा इत्यर्थः। तस्याः नाथः कालप्रियानाथः इति षष्ठीतत्पुरुषसमासः, तस्य।

५. आर्यमिश्रान् - आर्याः च अमी मिश्राः च आर्यमिश्राः इति कर्मधारयसमासः, तान् आर्यमिश्रान्।

६. जातूकर्णीपुत्रः - जतूकर्णस्य गोत्रापत्यं स्त्री जातूकर्णी। तस्याः पुत्रः जातूकर्णीपुत्रः इति षष्ठीतत्पुरुषसमासः।

## पाठगतप्रश्नाः - २

४. आर्यमिश्रान् कदा विज्ञापयति सूत्रधारः।

५. भवभूतिः कीदृशः।

६. पदवाक्यप्रमाणज्ञः इति पदस्य का व्युत्पत्तिः।

## १२.४) साम्प्रतं मूलपाठम् अवगच्छाम - ३

**यं ब्रह्माणमियं देवी वाग्वश्येवानुवर्तते।**
**उत्तरं रामचरितं तत्प्रणीतं प्रयोक्ष्यते।।२।।**

**अन्वयः -**

यं ब्रह्माणम् इयं देवी वाक् वश्या इव अनुवर्तते। तत्प्रणीतम् उत्तरं रामचरितं प्रयोक्ष्यते।

**अन्वयार्थः -**

यं भवभूतिं ब्रह्माणं यजनादिषट्कर्मनिरतं ब्राह्मणम् इयम् एषा देवी भगवती वाक् वाणी सरस्वती वश्या इव अधीना स्त्री इव अनुवर्तते अनुसरणं करोति। तत्प्रणीतं भवभूतिकृतम् उत्तरं रामचरितम् उत्तररामचरिताख्यं नाटकं प्रयोक्ष्यते अभिनेष्यते।

**व्याख्यानम् -**

अत्र सूत्रधारमुखेन स्वगुणवर्णनं कविः करोति। यथा एकेन पुरुषेण वशीभूता नारी तं पुरुषं सततम् अनुकरोति। तेन पुरुषेण उक्तं यत् किमपि सम्पाद्यं सा नारी सम्पादयति। एवमेव वाचां देवी हंसवाहना सरस्वती अपि कविं भवभूतिं सततम् अनुगच्छति। अतः कविः यथा इष्टवान् तथा एव वाक्यद्वारा मनोगतं भावं प्रकटयितुं समर्थः। अनेन नाट्यस्यापि अस्य असाधारणत्वं प्रकाशितं भवति। अत्र नाट्यस्य नामोल्लेखः अपि कविना क्रियते उत्तररामचरितम् इति। उत्तरं नाम राज्याभिषेकात् अनन्तरम्। रामचरितं च पुरुषोत्तमस्य श्रीरामस्य चरित्रम्। रावणवधात् परं वनवासं समाप्य यदा रामः

प्रत्यागतवान् तदा रामस्य राज्याभिषेकः सञ्जातः। ततः परं श्रीरामस्य चरितम् अर्थात् जीवनवृत्तान्तः नाट्ये अस्मिन् वर्णितः अस्ति। तदेव नाटकम् इदानीम् अभिनयेन प्रस्तूयते इति सूत्रधारस्य उद्घोषः।

**विशेषटिप्पणी -**

अत्र प्ररोचना प्रस्तुता। तस्या लक्षणं तावत् -

"निवेदनं प्रयोज्यस्य निर्देशो देशकालयोः।

कविकाव्यादीनां प्रंशसा तु प्ररोचना।।" इति।

अत्र संस्कृते भाषणाद् भारती वृत्तिः। तस्या लक्षणं तावत् -

"भारती संस्कृतप्रायो वाग्व्यापारो नराश्रयः।" इति।

**व्याकरणविमर्शः -**

१. वश्या - वश्धातोः यति टापि वश्या इति रूपम्। वशंगता इत्यर्थः।
२. प्रणीतम् - प्रपूर्वकात् नीधातोः क्तप्रत्यये नपुंसकलिङ्गे प्रथमैकवचने रूपम्।
३. प्रयोक्ष्यते - प्रपूर्वकात् युज्धातोः लृटि प्रथमपुरुषैकवचने रूपम्।
४. रामचरितम् - रामस्य चरितं रामचरितम् इति षष्ठीतत्पुरुषसमासः।
५. तत्प्रणीतम् - तेन प्रणीतं तत्प्रणीतम् इति तृतीयातत्पुरुषसमासः।

**सन्धिविच्छेदः -**

१. वाग्वश्येवानुवर्तते - वाक् वश्या इव अनुवर्तते।

**अलङ्कारविमर्शः -**

१. वश्येव इत्यत्र क्रियोत्प्रेक्षणाद् उत्प्रेक्षालङ्कारः। तल्लक्षणं तावत्- "भवेत्सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मना।" इति।

**छन्दः** - अस्मिन् श्लोके अनुष्टुप्-छन्दः वर्तते।

## पाठगतप्रश्नाः - ३

७. अस्य नाटकस्य नाम किम्।
८. वाग्वश्येवानुवर्तते इत्यस्य सन्धिविच्छेदं कुरुत।
९. नाटकमिदं कः विरचितवान्।
१०. ग्रन्थकर्तुः कीदृशं वैशिष्ट्यम्।

## १२.५) साम्प्रतं मूलपाठम् अवगच्छाम - ४

**सूत्रधारः -** **एषोऽस्मि कार्यवशादायोध्यकस्तदानींतनश्च संवृत्तः (समन्तादवलोक्य) भो भो! यदा तावदत्रभवतः पौलस्त्यकुलधूमकेतोः महाराजरामस्यायं पट्टाभिषेकसमयो रात्रिन्दिवमसंहृतानन्दनान्दीकः, तत्किमिदानीं विश्रान्तचारणानि चत्वरस्थानानि?**

**(प्रविश्य)**

**नटः -** **भाव ! प्रेषिता हि स्वगृहान्महाराजेन लङ्कासमरसुहृदो महात्मानः प्लवङ्गमराक्षसाः सभाजनोपस्थायिनश्च नानादिगन्तपावना ब्रह्मर्षयो राजर्षयश्च, यत्समाराधनायैतावतो दिवसान् प्रमोद आसीत्।**

**सूत्रधारः -** **आ, अस्त्येतन्निमित्तम्।**

### अन्वयार्थः -

**सूत्रधारः** - एषः अहं सूत्रधारः कार्यवशात् अभिनयादिकार्यकारणात् आयोध्यकः अयोध्यावासी तदानीन्तनः रामकालीनः संवृत्तः सञ्जातः अस्मि वर्ते। (समन्तात् परितः अवलोक्य दृष्ट्वा) भो भो हे नट, अत्रभवतः पूज्यस्य पौलस्त्यकुलधूमकेतोः रावणवंशविनाशकस्य पट्टाभिषेकसमयः राज्याभिषेककालः रात्रिन्दिवम् अहर्निशम् असंहृतानन्दनान्दीकः असंहृता अविरतं वाद्यमाना आनन्दनान्दी यस्मिन् स तथोक्तः। तत्किम् तत् कथम् इदानीम् अधुना विश्रान्तचारणानि विश्रान्ताः अपगताः चारणाः नटाः येभ्यः तानि विश्रान्तचारणानि चत्वरस्थानानि चतुष्पथभूतयः।

**नटः** - भाव हे विद्वन् सूत्रधार स्वगृहात् निजगृहात् महाराजेन श्रीरामचन्द्रेण प्रेषिताः प्रस्थापिताः लङ्कासमरसुहृदो लङ्कायां रावणनगर्यां घटितः यः समरः युद्धः तत्र ये सुहृदः मित्राणि ते लङ्कासमरसुहृदः महात्मानः उदाराशयाः प्लवङ्गमराक्षसाः सुग्रीवादिवानराः विभीषणादिराक्षसाः, नानादिगन्तपावनाः नानादिशां पवित्रीकृतः ब्रह्मर्षयः ब्रह्मकुलोत्पन्नाः गौतमादयः ऋषयः, राजर्षयः क्षत्रियकुलोत्पन्नाः जनकादयः ऋषयः, सभाजनोपस्थायिनः रामस्य अभिनन्दनं कर्तुं समागताः यत्समाराधनाय येषां सत्काराय एतावतः इयतः दिवसान् दिनानि व्याप्य प्रमोदः आनन्दोत्सवः आसीत्।

**सूत्रधारः** - अस्तु तर्हि एतत् एव निःशब्दतायाः कारणम् अस्ति।

### व्याख्यानम् -

अधुना सूत्रधारः नाट्यप्रसङ्गात् एकः अयोध्यानिवासी सञ्जातः। ततश्च स समन्तात् दृष्ट्वा प्रसङ्गनिर्देशं करोति - भोः अयं तावत् अयोध्याधिपतेः श्रीमतः रामचन्द्रस्य राज्याभिषेकस्य समयः। तर्हि रङ्गालयस्य प्राङ्गणे स्तावकाः स्तुतिपाठात् कथं विरताः। ततः नटः सूत्रधारं सम्बोध्य निःशब्दतायाः कारणं ज्ञापयन् वदति यत् उत्सवः समाप्तः। अतः रावणेन सह युद्धे ये वानरा आत्मपराक्रमं प्रदर्श्य युद्धं कृतवन्तः ते रामसुहृदः वानराः उत्सवार्थं समुपागताः आसन्। इदानीम् उत्सवः समाप्तः। अतः ते निजदेशं गताः। नानादेशाद् आगताः वसिष्ठादयः ब्रह्मर्षयः जनकादयः राजर्षयः अपि स्वप्रदेशं गताः। एवं सूत्रधारः नीरवतायाः कारणं जानाति।

**व्याकरणविमर्शः -**

१. संवृत्तः- समित्युपसर्गपूर्वकात् वृद्धातोः क्तप्रत्यये रूपम्।

२. पौलस्त्यकुलधूमकेतोः - पौलस्त्यस्य कुलं पौलस्त्यकुलम् इति षष्ठीतत्पुरुषसमासः। तस्य धूमकेतुः इव इति षष्ठीतत्पुरुषसमासः, तस्य।

३. पट्टाभिषेकसमयः - पट्टप्रधानः अभिषेकः पट्टाभिषेकः इति शाकपार्थिवादिवत्समासः। पट्टाभिषेकस्य समयः पट्टाभिषेकसमयः इति षष्ठीतत्पुरुषसमासः।

४. रात्रिन्दिवम्- रात्रौ च दिवा च रात्रिन्दिवम् इति समाहारद्वन्द्वसमासः।

५. विश्रान्तचारणानि - विश्रान्ताः चारणाः येभ्यः येषु वा तानि विश्रान्तचारणानि इति बहुव्रीहिसमासः।

६. लङ्कासमरसुहृदः - लङ्कायां वृत्तः समरः लङ्कासमरः। तस्मिन् सुहृदः लङ्कासमरसुहृदः।

७. नानादिगन्तपावनाः - नाना दिशः नानादिशः इति कर्मधारयसमासः। नानादिशाम् अन्ताः नानादिगन्ताः इति षष्ठीतत्पुरुषसमासः। तान् पावयन्ति इति नानादिगन्तपावनाः।

## पाठगतप्रश्नाः - ४

११. के के रामराज्याभिषेकाय उपागताः।

१२. कथं ते अयोध्यामुपागताः।

१३. अयोध्यायां निःशब्दतायाः किं कारणम्।

१४. पट्टाभिषेकसमयः इत्यत्र समासनिर्णयः कार्यः।

१५. कः आयोध्यकः संवृत्तः।

## १२.६) साम्प्रतं मूलपाठम् अवगच्छाम - ५

**नटः -** **अन्यच्च -**

**वसिष्ठाधिष्ठिता देव्यो गता रामस्य मातरः।**
**अरुन्धतीं पुरस्कृत्य यज्ञे जामातुराश्रमम् ॥३॥**

**अन्वयः -**

अन्यच्च, वसिष्ठाधिष्ठिता देव्यः रामस्य मातरः अरुन्धतीं पुरस्कृत्य यज्ञे जामातुः आश्रमं गताः।

**अन्वयार्थः -**

**नटः** - अन्यत् अपरम् अपि कारणम् अस्ति।



वसिष्ठाधिष्ठिताः कुलगुरुणा वसिष्ठेन संरक्षिताः देव्यः दशरथमहिष्यः कौशल्याकैकेयीसुमित्राः रामस्य रामचन्द्रस्य मातरः जनन्यः अरुन्धतीं गुरुपत्नीं पुरस्कृत्य अग्रे कृत्वा यज्ञे यज्ञनिमित्तं जामातुः कन्यापतेः ऋष्यशृङ्गस्य आश्रमं तपःस्थलं गताः प्राप्ताः।

**व्याख्यानम् -**

अस्मिन् श्लोके अयोध्यायां गीतावाद्यादेः अभावस्य अपरं कारणं वदति नटः। महाराजस्य दशरथस्य एका कन्या आसीत्। तस्याः नाम शान्ता। शान्ता महामुनिम् ऋष्यशृङ्गं परिणीतवती। तस्य जामातुः ऋष्यशृङ्गस्य आश्रमे कश्चन यज्ञः प्रचलति। अतः यज्ञदर्शनाय दशरथमहिष्यः श्रीरामस्य मातरः कौशल्याकैकीयासुमित्राः तत्र गताः। अतः ताः अयोध्यायाम् न सन्ति इति कारणात् तत्र गीतवाद्यादिकं न भवति इति तात्पर्यम्।

**व्याकरणविमर्शः -**

१. वसिष्ठाधिष्ठिताः- अधिपूर्वकात् स्थाधातोः क्तप्रत्यये टापि अधिष्ठिता इति रूपम्। वसिष्ठेन अधिष्ठिता वसिष्ठाधिष्ठिता इति तृतीयातत्पुरुषसमासः।

२. पुरस्कृत्य – पुरस् इति पूर्वकात् कृधातोः क्त्वाप्रत्यये क्त्वाप्रत्ययस्य स्थाने ल्यपि पुरस्कृत्य इति रूपम्।

**सन्धिविच्छेदः**

१. देव्यो गता रामस्य – देव्यः+गताः+रामस्य।

२. जामातुराश्रमम् - जामातुः+आश्रमम्।

**छन्दः** - अस्मिन् श्लोके अनुष्टुप् छन्दः।



## पाठगतप्रश्नाः - ५

१६. रामस्य मातरः कुत्र किमर्थं च गताः।

१७. कां पुरस्कृत्य रामस्य मातरः गताः।

## १२.७) साम्प्रतं मूलपाठम् अवगच्छाम - ६

**सूत्रधारः -** **वैदेशिकोऽस्मीति पृच्छामि। कः पुनर्जामाता ?**

**कन्यां दशरथो राजा शान्तां नाम व्यजीजनत्।**
**अपत्यकृतिकां राज्ञे रोमपादाय तां ददौ ॥४॥**

**विभाण्डकसुतस्तामृष्यश्रृङ्ग उपयेमे। तेन द्वादशवार्षिकं सत्रमारब्धम्।**
**तदनुरोधात्कठोरगर्भामपि जानकीं विमुच्य गुरुजनस्तत्र यातः।**

**अन्वयः -**

**सूत्रधारः** - वैदेशिकः अस्मि इति पृच्छामि। कः पुनः जामाता।

**नटः** - राजा दशरथः शान्तां नाम कन्यां व्यजीजनत् राज्ञे रोमपादाय अपत्यकृतिकां तां ददौ।

विभाण्डकसुतः ऋष्यशृङ्गः ताम् उपयेमे। तेन द्वादशवार्षिकं सत्रम् आरब्धम्। तदनुरोधात् कठोरगर्भाम् अपि जानकीं विमुच्य गुरजनः तत्र यातः।

**अन्वयार्थः -**

**सूत्रधारः** - वैदशिकः विदेशवासी अस्मि भवामि इति अतः पृच्छामि जिज्ञासां करोमि। कः पुनः जामाता कन्यापतिः।

**नटः** - राजा महाराजः दशरथः शान्तां नाम कन्यां कुमारीं व्यजीजनत् उत्पादयामास, राज्ञे महाराजाय रोमपादाय रोमपादाभिधाय अपत्यकृतिकां कृत्रिमकन्यारूपां तां शान्तां ददौ प्रदत्तवान्।

विभाण्डकसुतः विभाण्डकमुनेः पुत्रः ऋष्यशृङ्गः एतन्नामकः महर्षिः तां शान्ताम् उपयेमे परिणीतवान्। तेन मुनिना ऋष्यशृङ्गेण द्वादशवार्षिकं द्वादशवर्षाणि व्याप्य सत्रम् यज्ञः आरब्धम् उपक्रान्तः। तदनुरोधात् तस्य मुनेः आग्रहवशात् कठोरगर्भां पूर्णगर्भां जानकीं स्ववधूं जनकसुतां सीतां विमुच्य परित्यज्य गुरुजनः पूज्यजनः वसिष्ठकौशल्यादयः तत्र ऋष्यशृङ्गस्य आश्रमं गतः याताः।

**व्याख्यानम् -**

सूत्रधारः कथयति यत् स वैदेशिकः अस्ति। अर्थात् सः अयोध्यावासी नास्ति। अतः अयोध्याविषये तस्य समीचीनं ज्ञानं नास्ति इति सः अङ्गीकरोति। सूत्रधारः जानाति यत् दशरथस्य कापि पुत्री एव नास्ति। अतः स पृच्छति - कः पुनः महाराजस्य दशरथस्य जामाता इति।

अत्र नटः राज्ञः दशरथस्य कन्यायाः परिचयं प्रददाति। स वदति यत् राज्ञः दशरथस्य शान्ता नाम एका कन्या आसीत्। किन्तु जन्मनः परमेव राजा तां कन्याम् अङ्गराजाय रोमपादाय दत्तकरूपेण प्रदत्तवान्। विभाण्डकमुनेः पुत्रः महामुनिः ऋष्यशृङ्गः तां परिणीतवान्। स मुनिः ऋष्यशृङ्गः द्वादशवर्षव्यापिनम् एकं यज्ञं समारब्धवान्। अतः तस्य अनुरोधात् गर्भिणीं सीताम् अयोध्यायां संस्थाप्य वसिष्ठकौशल्याकैकेयीसुमित्रादयः तत्र यज्ञनिमित्तं गताः।

**व्याकरणविमर्शः -**

१. व्यजीजनत् - विपूर्वकात् जन्-धातोः णिचि लुङ्लकारे प्रथमपुरुषैकवचने व्यजीजनत् इति रूपम्।

२. अपत्यकृतिकाम् - कृता एव कृतिका अपत्यं च सा कृतिका इति अपत्यकृतिका इति कर्मधारयसमासः, ताम् अपत्यकृतिकाम्। विहितकृत्रिमकन्याम् इत्यर्थः।

३. उपयेमे- उपपूर्वकात् यम्धातोः लिटि प्रथमपुरुषैकवचने रूपम्।

४. कठोरगर्भाम् - कठोरः पूर्णः गर्भः यस्याः सा कठोरगर्भा, तां कठोरगर्भाम् इति बहुव्रीहिसमासः।

**छन्दः** - कन्यामित्यस्मिन् श्लोके अनुष्टुप् छन्दः।

## पाठगतप्रश्नाः - ६

१८. राज्ञः दशरथस्य कन्यायाः नाम किम्।

१९. राजा दशरथः कन्यां कस्मै प्रदत्तवान्।

२०. अपत्यकृतिकाम् इत्यस्य कः अर्थः।

२१. कः शान्ताम् उपयेमे।

२२. ऋष्यशृङ्गः कीदृशं सत्रमारब्धवान्।

## १२.८) साम्प्रतं मूलपाठम् अवगच्छाम - ७

**सूत्रधारः -** **तत्किमनेन ? एहि राजद्वारमेव स्वजातिसमयेनोपनिष्ठावः।**

**नटः -** **तेन हि निरूपयतु राज्ञः सुपरिशुद्धामुपस्थानस्तोत्रपद्धतिं भावः।**

**सूत्रधारः -** **मारिष,**

**सर्वथा व्यवहर्तव्यं कुतो ह्यवचनीयता।**
**यथा स्त्रीणां तथा वाचां साधुत्वे दुर्जनो जनः ॥ ५॥**

**अन्वयः -**

**सूत्रधारः** - तत् अनेन किम्। एहि स्वजातिसमयेन राजद्वारम् एव उपतिष्ठावः।

**नटः** - तेन राज्ञः सुपरिशुद्धाम् उपस्थानस्तोत्रपद्धतिं निरूपयतु।

**सूत्रधारः** - मारिष, सर्वथा व्यवहर्तव्यम् अवचनीयता कुतः? हि जनो यथा स्त्रीणां साधुत्वे दुर्जनः तथा वाचाम् (अपि दुर्जनः)।

**अन्वयार्थः -**

**सूत्रधारः** - तत् तर्हि अनेन उत्सवविरामहेतोः चिन्तनेन किं साध्यते। स्वजातिसमयेन स्वजात्याः चारणजात्या समयेन आचारेण राजद्वारम् राज्ञो रामस्य प्रतीहारम् उपतिष्ठावः उपसृत्य तिष्ठावः।

**नटः** - तेन राजद्वारे स्तुतेः पठनीयतया निरूपयतु चिन्तयतु सुपरिशुद्धां सर्वथा दोषशून्याम् उपस्थानस्तोत्रपद्धतिं राजसमीपगमनार्थां स्तुतिपरिपाटीं भावः विद्वान् भवान्।

**सूत्रधारः** - मारिष आर्य, सर्वथा समस्तप्रकारेण व्यवहर्तव्यं व्यवहारः करणीयः अवचनीयता निर्दोषता कुतः कस्मात् कारणात्। हि यतः जनः लोकः यथा येन प्रकारेण स्त्रीणां नारीणां तथा तेनैव प्रकारेण वाचां वाणीनां साधुत्वे सत्यतायां दुर्जनः दोषदर्शी।

### व्याख्यानम् -

ततः सूत्रधारः नटेन स्वकार्यं सम्पादयितुं राजद्वारं प्रति प्रस्थितः। तदा नटः सूत्रधारम् उद्दिश्य कथयति यत् राजद्वारे स्तुतिपाठस्य आवश्यकत्वात् दोषरहितां नृपोचितां राजस्तुतिपद्धतिं भवान् विचारयतु इति। ततः सूत्रधारः नटम् उद्दिश्य वदति यत्सर्वथा इति। अत्र सूत्रधारेण लोकस्य निन्दा विहिता। लोके जनाः दोषरहिते वस्तुनि अपि आयासेन दोषम् उद्भावयति। एवं ते यथा साध्वीनां स्त्रीणां सतीत्वे सन्देहं प्रकटयति तथा केनापि कविना लिखितेन काव्ये अपि। एवं दोषदर्शनं तेषां स्वभावसिद्धम् अस्ति। अतः तेषां विषये विचिन्त्य व्यवहारः न त्याज्यः। अतः सूत्रधारः अपि तत् सर्वम् अचिन्तयित्वा एव स्तुतिकरणार्थं राजद्वारं गमिष्यति इति तस्य आशयः। वस्तुतः अनेन पद्येन कविना सीताविषयकस्य अपवादस्य अवतारणा एव विहिता वर्तते।

### विशेषटिप्पणी -

अत्र श्लोके सीतापवादस्य अवतारणा विहिता। तद् मुखसन्धेः समाधानाख्यमङ्गं भवति। तल्लक्षणं तावद् दर्पणे - "बीजस्यागमनं यत्तु तत्समाधानमुच्यते" इति।

### व्याकरणविमर्शः -

१. सर्वथा - सर्वशब्दात् थाल्प्रत्यये सर्वथा इति रूपम्। सर्वेण प्रकारेण इति तदर्थः।

२. व्यवहर्तव्यम्- वि-अव इत्युपसर्गद्वयपूर्वकात् हृधातोः तव्यत्प्रत्यये प्रथमैकवचने रूपम्।

३. अवचनीयता - वचनीयं दोषः। तस्य भावः इति तल्प्रत्यये वचनीयता। न वचनीयता अवचनीयता इति नञ्तत्पुरुषसमासः।

### सन्धिविच्छेदः -

१. कुतो ह्यवचनीयता - कुतः+हि+अवचनीयता।

२. दुर्जनो जनः - दुर्जनः+जनः।

### अलङ्कारविमर्शः -

१. श्लोके कुतो ह्यवचनीयता इति वाक्यं प्रति उत्तरार्धवाक्यार्थस्य हेतुत्वात् काव्यलिङ्गमलङ्कारः । तल्लक्षणं तावत् - "हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यते।" इति।

२. यथा स्त्रीणां तथा वाचाम् इत्यत्र उपमालङ्कारः। तल्लक्षणं तावद्दर्पणे- "साम्यं वाच्यमवैधर्म्यं वाक्यैक्य उपमा द्वयोः।"इति।

३. अत्र उपमायाः काव्यलिङ्गालङ्कारस्य चाङ्गाङ्गिभावात् सङ्करालङ्कारः।

**छन्दः** - सर्वथा इत्यस्मिन् श्लोके अनुष्टुप् छन्दः।

## पाठगतप्रश्नाः - ७

२३. अवचनीयता कुतः नास्ति।

२४. लोकः कीदृशः भवति।

## १२.९) साम्प्रतं मूलपाठम् अवगच्छाम - ८

**नटः -** **अतिदुर्जन इति वक्तव्यम्।**

**देव्यामपि हि वैदेह्यां सापवादो यतो जनः।**
**रक्षोगृहस्थितिर्मूलमग्निशुद्धौ त्वनिश्चयः ॥ ६ ॥**

**सूत्रधारः -** **यदि पुनरियं किंवदन्ती महाराजं प्रति स्यन्देत ततः कष्टं स्यात्।**

**अन्वयः -**

**नटः** - अतिदुर्जन इति वक्तव्यम्।

यतो हि जनः देव्यां वैदेह्याम् अपि सापवादः (वर्तते) रक्षोगृहस्थितिः (तस्य) मूलम् (अस्ति)। अग्निशुद्धौ तु (जनस्य) अनिश्चयः।

**सूत्रधारः** - यदि पुनः इयं किंवदन्ती महाराजं प्रति राजानं स्यन्देत ततः तदा कष्टं स्यात्।

**अन्वयार्थः -**

**नटः** - अतिदुर्जन अतिदोषदर्शी इति वक्तव्यं कथनीयम्। यतो हि यस्मात् कारणात् जनः लोकः देव्यां परमपूज्यायां वैदेह्यां जनकतनयायां सीतायाम् अपि सापवादः निन्दापरः वर्तते। रक्षोगृहस्थितिः रावणगृहनिवासः मूलं कारणम् अस्ति। अग्निशुद्धौ अग्निपरीक्षायां तु जनस्य अनिश्चयः निर्णयाभावः संशयः अस्ति।

**सूत्रधारः** - यदि पुनः चेत् इयम् एषा किंवदन्ती जनश्रुतिः महाराजं प्रति राजानं रामचन्द्रं प्रति स्यन्देत प्रस्रवेत् ततः तदा कष्टं कृच्छ्रं स्यात् भवेत्।

**व्याख्यानम् -**

पूर्वं सूत्रधारः लोकस्य निन्दाम् अकरोत्। अत्र नटः अपि लोकस्य अतिदुर्जनतां दोषदर्शितां वा प्रकाशयति। देवी तथा वैदेही इति पदाभ्यां सीतायाः चरित्रस्य अलौकिकोत्कर्षः ध्वनितो भवति। सीता अयोनिजा मनुष्यगर्भानुत्पन्ना। पुनश्च सा वैदेही अर्थात् आत्मज्ञानिनः विदेहराजस्य जनकस्य पुत्री अस्ति। तथापि राक्षसस्य रावणस्य गृहे तस्याः अवस्थानकारणात् जनाः तस्याः चरित्रदोषं पश्यन्ति। अग्निशुद्धौ अपि तेषां विश्वासः नास्ति। अतस्ते अतीव दुर्जनाः इति वक्तव्यम्। कविः भवभूतिः जनाः सीताचरित्रस्य निन्दकाः इति कथनेन रामस्य सीतापरित्यागः उचितः इति प्रस्तुतवान्। जनाः सीतायाः रावणराज्ये लङ्कायाम् अवस्थानकारणात् तस्याः दोषं प्रदर्शयन्ति। अत्र सूत्रधारः आशङ्कां प्रकटयति यत् केनापि प्रकारेण यदि एषा जनश्रुतिः महाराजं रामचन्द्रं प्रति प्रस्रवेत् तर्हि तस्य महत् कष्टं भवेत्।

**व्याकरणविमर्शः -**

१. वैदेह्याम्- विदेहस्य अपत्यं स्त्री इत्यर्थे विदेहशब्दात् अञ्प्रत्यये स्त्रियां ङीपि सप्तम्याः एकवचने रूपम्।

२. सापवादः - अपवादेन लाञ्छनेन सहितः सापवादः।

३. रक्षोगृहस्थितिः - रक्षसः गृहं रक्षोगृहम् इति षष्ठीतत्पुरुषसमासः। रक्षोगृहे स्थितिः रक्षोगृहस्थितिः इति सप्तमीतत्पुरुषसमासः।

४. अग्निशुद्धौ - अग्नौ शुद्धिः अग्निशुद्धिः इति सप्तमीतत्पुरुषसमासः।

५. अनिश्चयः - न निश्चयः अनिश्चयः इति नञ्तत्पुरुषसमासः।

**सन्धिविच्छेदः -**

१. सापवादो यतो जनः - सापवादः+यतः जनः।

२. रक्षोगृहस्थितिर्मूलमग्निशुद्धौ - रक्षोगृहस्थितिः+मूलम्+अग्निशुद्धौ।

३. त्वनिश्चयः - तु+अनिश्चयः।

**अलङ्कारविमर्शः -**

१. देव्यामपि इति श्लोके दोषाभावे सत्यपि दोषकथनाद् विभावनालङ्कारः। तल्लक्षणं तावत् - "विभावना विना हेतुं कार्योत्पत्तिर्यदुच्यते।" इति।

२. अग्नशुद्धौ सत्यामपि अविश्वासाद् विशेषोक्तिरलङ्कारः। तल्लक्षणं तावत् -"सति हेतौ फलाभावो विशेषोक्तिः" इति।

३. अतिदुर्जन इति वक्तव्यम् इति वाक्यं प्रति पूर्ववाक्यस्य हेतुत्वात् काव्यलिङ्गमलङ्कारः।

**छन्दः** - देव्यामपि इत्यस्मिन् श्लोके अनुष्टुप् छन्दः।

## पाठगतप्रश्नाः - ८

२५. सीतायाः अपवादस्य किं कारणम्।

२६. रक्षोगृहस्थितिर्मूलमग्निशुद्धौ इत्यस्य सन्धिविच्छेदं कुरुत।

२७. लोकः कुत्र न विश्वसिति।

## १२.१०) साम्प्रतं मूलपाठम् अवगच्छाम - ९

**नटः -** **सर्वथा ऋषयो देवाश्च श्रेयो विधास्यन्ति। (परिक्रम्य) भो भो क्वेदानीं महाराजः? (आकर्ण्य) एवं जनाः कथयन्ति -**

**स्नेहात्सभाजयितुमेत्य दिनान्यमूनि**
**नीत्वोत्सवेन जनकोऽद्य गतो विदेहान्।**
**देव्यास्ततो विमनसः परिसान्त्वनाय**
**धर्मासनाद्विशति वासगृहं नरेन्द्रः ॥७॥**

**(इति निष्क्रान्तौ)**

**(इति प्रस्तावना)**

### अन्वयः -

नटः - सर्वथा ऋषयः देवाः च श्रेयः विधास्यन्ति। परिक्रम्य भो भो क्व इदानीं महाराजः? आकर्ण्य एवं जनाः कथयन्ति - स्नेहात् सभाजयितुम् एत्य अमूनि दिनानि उत्सवेन नीत्वा जनकोऽद्य विदेहान् गतः। ततः विमनसः देव्याः परिसान्त्वनाय नरेन्द्रः धर्मासनात् वासगृहं विशति।

### अन्वयार्थः -

नटः - सर्वथा सर्वप्रकारेण ऋषयः वसिष्ठवाल्मीकिप्रमुखाः देवाः गङ्गापृथिव्यादयः देवताः च श्रेयः कल्याणं विधास्यन्ति करिष्यन्ति। (परिक्रम्य भ्रमित्वा) भो भो हे हे क्व इदानीं महाराजः अस्मिन् समये कुत्र अस्ति? आकर्ण्य श्रुत्वा एवम् इत्थं जनाः लोकाः कथयन्ति वदन्ति - स्नेहात् परमप्रेम्णः सभाजयितुम् रामचन्दम् अभिनन्दितुम् एत्य अयोध्यामागत्य अमूनि दिनानि एतानि दिनानि उत्सवेन प्रमोदेन राज्याभिषेकोत्सवेन नीत्वा यापयित्वा जनकः विदेहाधिपः अद्य अस्मिन् दिने विदेहान् स्वजनपदं जनकपुरीं गतः प्रस्थितः। ततः तस्मात् पितृगमनकारणात् विमनसः खिन्नायाः देव्याः सीतायाः परिसान्त्वनाय मनोविनोदाय नरेन्द्रः महाराजः रामचन्द्रः धर्मासनात् धर्मसिंहासनात् (उत्थाय) वासगृहम् सीतानिवासस्थानं विशति प्रविशति।

### व्याख्यानम् -

ततः नटः सूत्रधारम् आश्वस्य वदति यत देवताः ऋषयः च सर्वदा मङ्गलम् एव कुर्वन्ति। अतः चिन्ता न कर्तव्या। ततः नटः समन्तात् दृष्ट्वा महाराजः श्रीरामचन्द्रः इदानीं कुत्र तिष्ठति इति पृच्छति। ततश्च कथयति यद् दशरथतनयस्य रामचन्द्रस्य पट्टाभिषेकम् उपलक्ष्य न केवलं महर्षयः अपि तु राजर्षयः अपि आगताः इति पूर्वमेव उक्तम्। अतः राजर्षिः जनकः अपि उत्सवम् उपलक्ष्य तत्र आगतः। अपि च श्रीरामस्य श्वशुरः अपि वर्तते। उत्सवसमाप्त्यनन्तरं सः अद्य स्वदेशं विदेहं प्रतिनिर्वृत्तः। अतः तस्य गमनानन्तरं जनकपुत्री रामस्य धर्मपत्नी सीता खिन्ना सञ्जाता। अतः तस्य खेदं दूरीकर्तुं रामः धर्मासनात् उत्थाय वासगृहं प्रति गतः इति आशयः। अत्र धर्मासनात् किञ्च नरेन्द्रः इति पदद्वयं रामचरित्रस्य वैशिष्ट्यं प्रदर्शयति। रामः राजधर्मपालने स्थिरमतिः आसीत्। अतः स आदौ नरेन्द्रः, ततः सीतापतिः। भाविघटनाचक्रस्य बहु किमपि आभ्यां पदाभ्यां द्योतितम्। एवं नाट्यस्य प्रस्तावना समाप्यते।

**विशेषटिप्पणी -**

एवम् उत्तररामचरितस्य प्रस्तावना प्रस्तुता। प्रस्तावनालक्षणं तावद् दर्पणे -

"नटी विदूषको वापि पारिपार्श्विक एव वा।
सूत्रधारेण सहिताः संलापं यत्र कुर्वते।।
चित्रैर्वाक्यैः स्वकार्योत्थैः प्रस्तुताक्षेपिभिर्मिथः।
आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनापि वा।।" इति।

अत्र प्रयोगातिशयप्रस्तावना। तल्लक्षणं दर्पणे -

"यदि प्रयोगे एकस्मिन् प्रयोगोन्यः प्रयुज्यते।
तेन पात्रप्रवेशश्चेत् प्रयोगातिशयस्तदा।।"इति।

**व्याकरणविमर्शः -**

१. एत्य- आङ्पूर्वकात् इण्धातोः क्त्वाप्रत्यये तस्य ल्यबादेशे एत्य इति रूपम्।
२. विमनसः- विगतं मनः यस्याः सा विमनाः तस्याः विमनसः इति प्रादिसमासः।

**सन्धिविच्छेदः -**

१. दिनान्यमूनि - दिनानि+अमूनि।
२. नीत्वोत्सवेन – नीत्वा+उत्सवेन।
३. जनकोऽद्य – जनकः+अद्य।
४. गतो विदेहान् - गतः+विदेहान्।
५. देव्यास्ततो विमनसः - देव्याः+ततः+विमनसः।
६. धर्मासनाद्विशति - धर्मासनात्+विशति।

**छन्दः** - स्नेहादित्यस्मिन् वसन्ततिलकवृत्तम् अस्ति। अस्याः लक्षणं तावत् वृत्तरत्नाकरे - ज्ञेया वसन्ततिलका तभजा जगौ गः इति।

## पाठगतप्रश्नाः - ९

२८. सीतायाः खिन्नतायाः किं कारणम्।
२९. रामः सिंहासनाद् उत्थाय कथं वासगृहं गच्छति।
३०. वसन्ततिलकछन्दसः किं लक्षणम्।

## पाठसारः

समाप्तिकामो मङ्गलम् आचरेत् इति श्रुतिं मनसिकृत्य कविः नाट्यादौ पूर्वाचार्यान् व्यासवाल्मीक्यादीन् स्मरति। तेषां स्मरणेन वाग्देव्याः सरस्वत्याः लाभः तस्य इष्टः वर्तते। इदमेव मङ्गलं नान्दी इति कथ्यते नाट्यशास्त्रे। नान्दीपाठानन्तरं सूत्रधारः नाट्यकारस्य कवेः भवभूतेः संज्ञावंशादिपरिचयं प्रददाति। तदा एव स एतदपि सूचयति यत् राज्याभिषेकम् उपलक्ष्य अयोध्याम् आगताः अतिथयः सर्वे स्वस्वप्रदेशं प्रत्यागताः। महाराजदशरथस्य शान्ता नाम एका कन्या आसीत् यां स जन्मसमये एव दत्तकरूपेण अङ्गराजाय लोमपादाय प्रदत्तवान्। तस्याः पतिः महर्षिः ऋष्यशृङ्गः द्वादशवर्षव्यापिनम् एकं महायज्ञं समारब्धवान्। अतः तस्य अनुरोधात् रामजनन्यः कौशल्याकैकेयीसुमित्राः पूर्णगर्भां सीताम् अयोध्यायां संस्थाप्य वसिष्ठपत्नीम् अरुन्धतीं पुरस्कृत्य जामातुः आश्रमं गताः। अस्मिन् एव प्रसङ्गे सूत्रधारः सीताविषयकं लोकापवादं प्रकटयति तथा नटः अपि सीतायाः अग्निशुद्धिं जनाः न विश्वसन्ति इति कथयति। सूत्रधारः आशङ्कते यत् यदि राजा श्रीरामचन्द्रः एतत् सर्वं ज्ञास्यति तर्हि महदनिष्टं भविष्यति इति। तदाकर्ण्य नटः विश्वासं प्रकटयति यत् देवाः सर्वदा सर्वथा च जनानां कल्याणम् एव साधयन्ति। अपरतः पितुः जनकस्य अयोध्यायाः प्रस्थानकारणात् जानकी खिन्ना जाता। अतः तां सान्त्वयितुं पुरुषोत्तमः श्रीरामः सिंहासनाद् उत्थाय वासगृहं प्रति गृच्छति। एवं प्रकारेण नाटकस्य प्रस्तावना समाप्यते।

## पाठान्तप्रश्नाः

१. नान्दी नाम किम्। नान्द्या लक्षणमुक्त्वा तस्याः विषये किञ्चिद् आलोचयत।

२. कः नाम सूत्रधारः।

३. भवभूतिः कः। तस्य विषये लिखत।

४. मङ्गलश्लोकस्य व्याख्यानं लिखत।

५. अयोध्यायां गीतवाद्यादेः अभावस्य किं कारणम् आसीत्।

६. सम्पूर्णम् उत्तररामचरितं नाटकं रामायणस्य कस्मात् भागात् किं पर्यन्तं व्याप्तम् इत्यादिकं सर्वं वर्णयत।

७. एकः श्लोकः उच्यतां यत्र अनुष्टुप्-छन्दः वर्तते। तत्र च लक्षणस्य समन्वयं प्रदर्शयत।

## पाठगतप्रश्नानामुत्तराणि

१. कविः भगवतः अंशरूपां वाग्देवीं सरस्वतीम् इच्छति।

२. अनुष्टुप्छन्दसः लक्षणं -

श्लोके षष्ठं गुरु ज्ञेयं सर्वत्र लघु पञ्चमम्।
द्विचतुष्पादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः।।

३. वच्धातोः क्विप्प्रत्यये वाक इति रूपम्। तस्य वचनम् इत्यर्थः। नमः वाकः यस्मिन् इति नमोवाकः इति बहुव्रीहिसमासः, तं नमोवाकम्।

४. आर्यमिश्रान् सर्वविभूतसम्पन्नस्य महादेवस्य उत्सवेविज्ञापयति सूत्रधारः।

५. भवभूतिः काश्यपः श्रीकण्ठपदलाञ्छनः पदवाक्यप्रमाणज्ञः जातूकर्णीपुत्रः।

६. पदं च वाक्यं च प्रमाणं च पदवाक्यप्रमाणानि इति इतरेतरद्वन्द्वसमासः। तेषां ज्ञः पदवाक्यप्रमाणज्ञः।

७. अस्य नाटकस्य उत्तररामचरितं नाम।

८. वाक् + वश्या + इव + अनुवर्तते।

९. नाटकमिदं भवभूतिः विरचितवान्।

१०. ग्रन्थकर्तारं सरस्वती देवी वश्या स्त्री इव अनुवर्तते इति ग्रन्थकर्तुः वैशिष्ट्यम्।

११. रामस्य सुहृदः प्लवङ्गमराक्षसाः, वसिष्ठादयः ब्रह्मर्षयः, जनकादयः राजर्षयश्च रामराज्याभिषेकाय उपागताः।

१२. ते अभिषेकसमये रामस्य अभिनन्दनाय अयोध्यामुपागताः।

१३. राज्याभिषेकोत्सवसमाप्तेः परं दशरथमहिष्यः अयोध्यां त्यक्त्वा यज्ञाय ऋष्यशृङ्गमुनेः आश्रमं गता इति निःशब्दतायाः हेतुः। क

१४. अभिषेकस्य समयः अभिषेकसमयः इति षष्ठीतत्पुरुषः।

१५. सूत्रधारः आयोध्यकः संवृत्तः।

१६. रामस्य मातरः ऋष्यशृङ्गमुनेः अनुरोधाद् यज्ञं द्रष्टुं तस्य आश्रमं गताः।

१७. वसिष्ठपत्नीम् अरुन्धतीं पुरस्कृत्य रामस्य मातरः गताः।

१८. राज्ञः दशरथस्य कन्यायाः नाम शान्ता।

१९. राजा दशरथः कन्याम् अङ्गराजाय रोमपादाय प्रदत्तवान्।

२०. अपत्यकृतिकाम् इत्यस्य विहितकृत्रिमकन्याम् इत्यर्थः।

२१. विभाण्डकसुतः ऋष्यशृङ्गः शान्ताम् उपयेमे।

२२. ऋष्यशृङ्गः द्वादशवर्षव्यापि सत्रमारब्धवान्।

२३. सर्वथा व्यवहारः कर्तव्यः अतः अवचनीयता नास्ति।

२४. लोकः स्त्रीणां वाचां च साधुत्वे अपि दोषप्रदर्शकः भवति।

२५. सीतायाः अपवादस्य रक्षोगृहनिवासः कारणम्।

२६. रक्षोगृहस्थितिः+ मूलम्।

२७. लोकः अग्निशुद्धौ न विश्वसिति।

२८. सीतायाः खिन्नतायाः स्वपितुः जनकस्य विदेहगमनं कारणम्।

२९. रामः सिंहासनाद् उत्थाय सीतायाः मनोरञ्जनाय वासगृहं गच्छति।

३०. वसन्ततिलकछन्दसः लक्षणम् - उक्ता वसन्ततिलका तभजा जगौ गः इति।

॥ इति द्वादशः पाठः ॥

१३

# उत्तररामचरितम् - अष्टावक्रसंवादः

## प्रस्तावना

अस्मिन् पाठे प्रस्तावनायाः परं नाटकम् आरभ्यते। अत्र प्रथमतः सीतां सान्त्वयितुं रामः प्रविशति। तस्मिन् एव काले महर्षिः अष्टावक्रः ऋष्यशृङ्गस्य आश्रमात् तत्र आगच्छति। स चागत्य सीतां रामं च प्रति गुरुजनैः वसिष्ठादिभिः प्रदत्तान् उपदेशान् श्रावयति। राम आदेशानुसारमेव जीवनं यापयिष्यति इति प्रतिज्ञां करोति। ततश्च लक्ष्मणः आगत्य चित्रकरेण अङ्कितं चित्रं द्रष्टुं रामं कथयति। प्रसङ्गतः सीतायाः पवित्रतां वर्णयति रामः इत्येतत् सर्वं वयं पाठस्य पठनेन एव ज्ञास्यामः।

## उद्देश्यानि

अमुम् पाठं पठित्वा भवान् -

- रामस्य कांश्चन गुणान् ज्ञातुं शक्नुयात्।
- देव्याः सीतायाः चरितं जानीयात्।
- छन्दसां लक्षणानि जानीयात्।
- श्लोकानाम् अन्वयं प्रतिपदार्थादिकं च अवगच्छेत्।
- दीर्घानां पदानां विग्रहवाक्यं समासं च बोद्धुं समर्थः भवेत्।।

---

## १३.१) सम्पूर्णः मूलपाठः

**(ततः प्रविशत्युपविष्टो रामः सीता च)**

रामः- **देवि ! वैदेहि ! विश्वसिहि ते हि गुरवो न शक्नुवन्ति विहातुमस्मान्।**
**किन्त्वनुष्ठाननित्यत्वं स्वातन्त्र्यमपकर्षति।**
**सङ्कटा ह्याहिताग्नीनां प्रत्यवायैर्गृहस्थता ॥८॥**

सीता - **जाणामि अज्जउत्त! जाणामि। किंदु संदावआरिणो बन्धुजणविप्प-ओआ होन्ति।**
**(जानामि आर्यपुत्र! जानामि किन्तु संतापकारिणो बन्धुजनविप्रयोगा भवन्ति)।**

रामः - **एवमेतत्। एते हि दयमर्मच्छिदः संसारभावा। येभ्यो बीभत्समानाः संत्यज्य सर्वान्कामानरण्ये विश्राम्यन्ति मनीषिणः।**

**(प्रविश्य)**



कञ्चुकी - रामभद्र ! (इत्यर्धोक्ते साशङ्कम्) महाराज ! -

रामः - (सस्मितम्) आर्य ! ननु रामभद्र ! इत्येव मां प्रत्युपचारः शोभते तातपरिजनस्य। तद्यथाभ्यस्तमभिधीयताम्।

कञ्चुकी - देव ! ऋश्यश्रृङ्गाश्रमादष्टावक्रः सम्प्राप्तः।

सीता - अज्ज ! तदो किं विलम्बीअदि (आर्य! ततः किं विलम्ब्यते)।

रामः - त्वरितं प्रवेशय।

(कञ्चुकी निष्क्रान्तः।)

(प्रविश्य)

अष्टावक्रः - स्वस्ति वाम्।

रामः - भगवन् ! अभिवादये इत आस्यताम्।

सीता - भअव णमो दे। अवि कुसलं सजामातुअस्स गुरुअणस्स अज्जाए सन्ताए अ। (भगवन्नमस्ते। अपि कुशलं सजामातृकस्य गुरुजनस्यार्यायाः शान्तायाश्च?)

रामः - निर्विघ्नः सोमपीथी आवुत्तो मे भगवानृष्यश्रृङ्गः, आर्या च शान्ताः ?

सीता - अम्हे वि सुमरेदि (अस्मानपि स्मरति?)

अष्टावक्रः - (उपविश्य) अथ किम्। देवि ! कुलगुरुर्भगवान् वसिष्ठस्त्वामिदमाह-

विश्वम्भरा भगवती भवतीमसूत
राजा प्रजापतिसमो जनकः पिता ते।
तेषां वधूस्त्वमसि नन्दिनि! पार्थिवानां
येषां कुलेषु सविता च गुरुर्वयं च॥९॥

तत्किमन्यदाशास्महे। केवलं वीरप्रसवा भूयाः।

रामः - अनुगृहीताः स्मः।

लौकिकानां हि साधूनामर्थं वागनुवर्तते।
ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति ॥१०॥

अष्टावक्रः - इदं च भगवत्याऽरुन्धत्या देवीभिः शान्तया च भूयो भूयः संदिष्टम् - 'यः कश्चिद्गर्भदोहदो भवत्यस्याः सोऽवश्यमचिरात्सम्पादयितव्य' इति।

रामः- क्रियते यद्येषा कथयति।

अष्टावक्रः - ननान्दुः पत्या च देव्याः संदिष्टम्- 'वत्से, कठोरगर्भेति नानीतासि। वत्सोऽपि रामभद्रस्त्वद्विनोदार्थमेव स्थापितः। तत्पुत्रपूर्णोत्सङ्गामायुष्मतीं द्रक्ष्यामः इति।

रामः - (सहर्षलज्जास्मितम्) तथास्तु। भगवता वसिष्ठेन न किञ्चिदादिष्टोस्मि।

अष्टावक्रः - श्रूयताम्।



जामातृयज्ञेन वयं निरुद्धा-
स्त्वं बाल एवासि नवं च राज्यम्।
युक्तः प्रजानामनुरञ्जने स्या-
स्तस्माद्यशो यत्परमं धनं वः॥११॥

रामः - यथा समादिशति भगवान्मैत्रावरुणिः।

स्नेहं दयां च सौख्यं च यदि वा जानकीमपि।
आराधनाय लोकस्य मुञ्चतो नास्ति मे व्यथा ॥ १२ ॥

सीता- अदो जेव्व राहवधुरन्धरो अज्जउत्तो। (अत एव राघवधुरन्धर आर्यपुत्रः।)

रामः - कः कोऽत्र भोः। विश्राम्यतामष्टावक्रः।

अष्टावक्रः:- (उत्थाय परिक्रम्य च) अये कुमारलक्ष्मणः प्राप्तः।

(इति निष्क्रान्तः)

(प्रविश्य)

लक्ष्मणः- जयति जयत्यार्यः। आर्य! अर्जुनेन चित्रकरेणास्मदुपदिष्टमार्यस्य चरितमस्यां वीथ्यामभिलिखतम्। तत्पश्यत्वार्यः।

रामः- जानासि वत्स! दुर्मनायमानां देवीं विनोदयितुम्। तत्कियन्तमवधिं यावत्।

लक्ष्मणः- यावदार्याया हुताशनशुद्धिः।

रामः- शान्तं पापम् (ससान्त्ववचनम्।)

उत्पत्तिपरिपूतायाः किमस्याः पावनान्तरैः।
तीर्थोदकं च वह्निश्च नान्यतः शुद्धिमर्हतः ॥ १३ ॥

देवि देवयजनसम्भवे ! प्रसीद। एष ते जीविताविधिः प्रवादः।

क्लिष्टो जनः किल जनैरनुरञ्जनीय-
स्तन्नो यदुक्तमशुभं च न तत्क्षमं ते।
नैसर्गिकी सुरभिणः कुसुमस्य सिद्धा
मूर्ध्नि स्थितिर्न चरणैरवताडनानि॥ १४॥



## १३.२) साम्प्रतं मूलपाठम् अवगच्छाम - १०

**(ततः प्रविशत्युपविष्टो रामः सीता च)**

रामः- **देवि ! वैदेहि ! विश्वसिहि ते हि गुरवो न शक्नुवन्ति विहातुमस्मान्।**
**किन्त्वनुष्ठाननित्यत्वं स्वातन्त्र्यमपकर्षति।**
**सङ्कटा ह्याहिताग्नीनां प्रत्यवायैर्गृहस्थता ॥८॥**

सीता - **जाणामि अज्जउत्त! जाणामि। किंदु संदावआरिणो बन्धुजणविप्प-ओआ होन्ति। (जानामि आर्यपुत्र! जानामि किन्तु संतापकारिणो बन्धुजनविप्रयोगा भवन्ति)।**

रामः - **एवमेतत्। एते हि दयमर्मच्छिदः संसारभावा। येभ्यो बीभत्समानाः संत्यज्य सर्वान्कामानरण्ये विश्राम्यन्ति मनीषिणः।**

### अन्वयः -

(ततः प्रविशति उपविष्टः रामः सीता च)

**रामः** - दैवि वैदेहि, समाश्वसिहि, हि ते गुरवः अस्मान् विहातुं न शक्नुवन्ति। किन्तु अनुष्ठाननित्यत्वं स्वातन्त्र्यम् अपकर्षति। हि आहिताग्नीनां गृहस्थता प्रत्यवायैः सङ्कटा।

**सीता** - आर्यपुत्र, जानामि, बन्धुजनविप्रयोगाः सन्तापकारिणः भवन्ति।

**रामः** - एवम् एतत्। संसारभावाः हृदयमर्मच्छिदः येभ्यः बीभत्समानाः मनीषिणः सर्वान् कामान् सन्त्यज्य अरण्ये विश्राम्यन्ति।

### अन्वयार्थः

(ततः तस्मात् प्रविशति मञ्चे आविर्भवति उपविष्टः आसीनः रामः तत्पत्नी सीता च)

**रामः** - हे देवि वैदेहि विदेहराजपुत्रि! समाश्वसिहि विश्वसिहि समाश्वस्ता भव। हि यतः ते तव गुरवः जनकमहोदयाः अस्मान् त्वां मां च विहातुं परित्यक्तुं न शक्नुवन्ति समर्थाः न भवन्ति।

किन्तु परन्तु अनुष्ठाननित्यत्वं नित्यनैमित्तिकादिकर्मकलापनिर्वतनस्य नियमितत्वं स्वातन्त्र्यं स्वच्छन्दताम् अपकर्षति न सहते। हि यतः आहिताग्नीनाम् आहिताः स्थापिताः अग्नयः यैः ते तेषाम् अग्निहोत्रिणां गृहस्थता गार्हस्थ्यं प्रत्यवायैः विहितानाचरणजन्यैः पातकैः सङ्कटा दुःखपूरिता।

**सीता** - आर्यपुत्र स्वामिन्, जानामि वेद्मि, किन्तु परन्तु बन्धुजनविप्रयोगाः पितृजनादिविरहाः सन्तापकारिणः खेदजनकाः भवन्ति सन्ति।

**रामः** - एवम् एतत् त्वया यदुक्तं तत् सत्यमेव। संसारभावाः जीवलोकधर्माः हृदयमर्मच्छिदः हृदयस्य मर्माणि सन्धिस्थानानि छिन्दति ये ते हृदयमर्मस्थलभेदकाः येभ्यः संसारभावेभ्यः बीभत्समानाः जुगुप्समानाः विरक्ताः मनीषिणः आत्मदर्शिनः सर्वान् समस्तान् कामान् विषयान् सन्त्यज्य परित्यज्य अरण्ये वने विश्राम्यन्ति शान्तिं प्राप्नुवन्ति।

**व्याख्यानम् -**

अत्र श्रीरामः पितृगमनात् तद्वियोगात् खिन्नां पत्नीं सीतां प्रति समाश्वासं करोति। जनकमहोदयाः अस्माकं पूज्याः गुरुजनाः च वर्तन्ते। अतः ते अधिकं कालं व्याप्य अस्मान् विहाय स्थातुं न शक्ताः। अतः स पुनरागमष्यति इति भावः। एवं प्रकारेण जानकीं सान्त्वयति प्रभुः श्रीरामः।

नित्यं नैमित्तिकं काम्यं चेति त्रिविधं कर्म भवति। तेषु नित्यकर्मानुष्ठाने फलं नास्ति, किन्तु अनाचारे प्रत्यवायो सम्भवति। नैमित्तिककर्मानुष्ठाने फलं विद्यते अपि च अकरणे सति प्रत्यवायो भवति। काम्यकर्मानुष्ठाने फलं किमपि नास्ति अविधाने दोषः अपि नास्ति। धार्मिकः पुरुषः एतानि कर्माणि नियतम् आचरन्ति। अर्थात् ते वैवाहिकजीवने नित्यम् अग्निहोत्रम् उपासते। तदेव तेषां नित्यकर्म। एवं विदेहराजः जनकः अग्निहोत्रम् आचरति स्म। अतः अयोध्यायां स बहुदिनं यावत् स्थातुम् अशक्तः आसीत्। तस्मात् एव स गतवान्, न तु सीतां प्रति स्नेहस्य न्यूनतावशात् इति सीतां प्रति रामस्य सान्त्वनवचनम्।

रामस्य आश्वासप्रदानात् परं सीता रामम् उद्दिश्य अकथयत् यत् सा सर्वमेव अवगच्छति इति। किन्तु स्वजनानां वियोगः सततं सन्तापदायी भवति। एतत्सीतावचः श्रुत्वा सत्यतया स्वीकृत्य च रामः अवदत् – अस्य संसारस्य धर्माः हृदयस्य मर्मभेदकाः सन्ति। येभ्यः विरक्ताः आत्मज्ञाः सर्वान् विषयान् परित्यज्य वनेषु शान्तिं लभन्ते। तत्र कामना एव दुःखस्य मूलम्।

**व्याकरणविमर्शः -**

१. विहातुम् - विपूर्वकात् हाधातोः तुमुन्प्रत्यये विहतुम् इति रूपम्।

२. अनुष्ठानम्- अनुपूर्वकात् स्थाधातोः ल्युटि तस्य अनादेशे अनुष्ठानम् इति रूपम्। अनुष्ठानस्य नित्यत्वम् अनुष्ठाननित्यत्वम् इति षष्ठीतत्पुरुषसमासः।

३. प्रत्यवायः- प्रति अव इत्युपसर्गद्वयपूर्वकात् इण्धातोः घञ्प्रत्यये प्रत्यवाय इति रूपम्।

४. आहिताग्नीनाम् - आहितः अग्निः यैः ते आहिताग्नयः, तेषाम् आहिताग्नीनाम् इति बहुव्रीहिसमासः। साग्निकानाम् इत्यर्थः।

५. बीभत्समानाः - बध्धातोः सनप्रत्यये निष्पन्नाद् बीभत्सधातोः शानचि पुंसि प्रथमाबहुवचने बीभत्समानाः इति रूपम्।

६. बन्धुजनविप्रयोगाः - विपूर्वकात् प्रपूर्वकात् युज्धातोः घञा विप्रयोगशब्दो निष्पन्नः। बन्धुजनानां विप्रयोगाः बन्धुजनविप्रयोगाः इति षष्ठीतत्पुरुषसमासः।

**सन्धिविच्छेदः -**

१. किन्त्वनुष्ठाननित्यत्वम् - किन्तु+अनुष्ठाननित्यत्वम्।

२. ह्याहिताग्नीनाम् - हि+आहिताग्नीनाम्।

३. प्रत्यवायैर्गृहस्थता - प्रत्यवायैः+गृहस्थता।



**छन्दः** - अस्मिन् श्लोके अनुष्टुप्-छन्दः वर्तते।

**अलङ्कारविमर्शः -**

१. अत्र श्लोके पूर्वार्धं प्रति उत्तरार्धस्य हेतुत्वात् काव्यलिङ्गमलङ्कारः।

२. उत्तरार्धेन पूर्वार्धस्य समर्थनाद् अर्थान्तरन्यासालङ्कारः। तल्लक्षणं दर्पणे -

"सामान्यं वा विशेषेण विशेषस्तेन वा यदि।

कार्यञ्च कारणेनेदं कार्येण च समर्थ्यते।।

साधर्म्येणेतरेणार्थान्तरन्यासोऽष्टधा ततः।।" इति।

३. अत्र अर्थान्तरन्यासस्य काव्यलिङ्गस्य चाङ्गाङ्गिभावात् सङ्करालङ्कारः।

## पाठगतप्रश्नाः - १

१. किं गृहस्थानां स्वातन्त्र्यम् अपकर्षति।

२. किन्त्वनुष्ठाननित्यत्वम् सन्धिविच्छेदं कुरुत।

३. कर्म कतिविधं कतिविधं भवति। कानि च तानि।

४. आहिताग्नीनां गृहस्थता कथं भवति।

५. के सन्तापकारिणः भवन्ति।

६. संसारभावाः कथं भवन्ति।

७. कथं मनीषिणः अरण्ये विश्राम्यन्ति।

---

## १३.३) साम्प्रतं मूलपाठम् अवगच्छाम - ११

**(प्रविश्य)**

**कञ्चुकी -** **रामभद्र! (इत्यर्धोक्ते साशङ्कम्) महाराज ! -**

**रामः -** **(सस्मितम्) आर्य ! ननु रामभद्र ! इत्येव मां प्रत्युपचारः शोभते तातपरिजनस्य। तद्यथाभ्यस्तमभिधीयताम्।**

**कञ्चुकी -** **देव ! ऋश्यश्रृङ्गाश्रमादष्टावक्रः सम्प्राप्तः।**

**सीता -** **अज्ज ! तदो किं विलम्बीअदि (आर्य! ततः किं विलम्ब्यते)।**

**रामः -** **त्वरितं प्रवेशय।**

**(कञ्चुकी निष्क्रान्तः।)**

**अन्वयः -**

(प्रविश्य) कञ्चुकी - रामभद्र! (इत्यर्धोक्ते साशङ्कम्) महाराज!

**रामः -** (सस्मितम्) आर्य! ननु रामभद्र! इत्येव तातपरिजनस्य मां प्रति उपचारः शोभते। तद् यथा अभ्यस्तम् अभिधीयताम्।

**कञ्चुकी -** देव! ऋश्यश्रृङ्गाश्रमाद् अष्टावक्रः सम्प्राप्तः।

**सीता -** आर्य! ततः किं विलम्ब्यते।

**रामः -** त्वरितं प्रवेशय।

(कञ्चुकी निष्क्रान्तः।)

**अन्वयार्थः -**

(प्रविश्य प्रवेशं कृत्वा)

**कञ्चुकी** - रामभद्र शोभनराम (इत्यर्धोक्ते साशङ्कं सभयम्) महाराज प्रभो...।

**रामः** - (सस्मितम् ईषद्धास्येन सहितम्) आर्य तातपरिजनस्य पितृचरणसेवकस्य रामभद्र इत्येव मां रामचन्द्रं प्रति उपचारः व्यवहारः शोभते युज्यते। तत् तस्माद् हेतोः यथाभ्यस्तम् अभ्यासानुरूपम् अभिधीयताम् उच्यताम्।

**कञ्चुकी** - देव प्रभो ऋष्यशृङ्गाश्रमात् मुनेः ऋष्यशृङ्गस्य आश्रमात् अष्टावक्रः तन्नामकः महात्मा सम्प्राप्तः आगतः।

**सीता** - आर्य ततः तस्मात् किं किमर्थं विलम्ब्यते विलम्बः क्रियते।

**रामः** - त्वरितम् अतिशीघ्रं प्रवेशय प्रवेशं कारय।

(कञ्चुकी निष्क्रान्तः गतः)

**व्याख्यानम् -**

ततः कञ्चुकी प्रविश्य रामचन्द्रं पूर्वतनाभ्यासानुसारं रामभद्र इत्येव आहूतवान्। किन्तु इदानीं सः अयोध्यायाः अधिपतिः सञ्जातः। अतः सशङ्कितः स परस्मिन् एव मूहूर्ते रामं महाराज इति आहूतवान्। एतत् सर्वम् अवलोक्य श्रीरामः स्मितहासं कृत्वा कञ्चुकीम् उद्दिश्य अवोचत् यत् रामभद्र इत्येव व्यवहारः तस्मै रोचते। यतो हि एते परिचारकाः पितृचरणसेवकाः भवन्ति। अत्र रामस्य औदार्यं प्रशंसनीयमेव। महाराजः सन्नपि भृत्यान् भयरहितान् सम्पादयति, एतेन तस्य क्षमा कथम् आसीत् इति बुध्यते। एवं तस्य धीरोदात्तनायकत्वम् उपपन्नम्। तस्मात् हेतोः पूर्वाभ्यासानुसारं वक्तव्यम् इति। कञ्चुकी ज्ञापितवान् यत् ऋष्यशृङ्गमुनेः आश्रमात् महर्षिः अष्टावक्रः आगतः। तदा रामः सीता च महर्षिं शीघ्रमेव अन्तः आनयनाय आज्ञापयतः। ततः च कञ्चुकी निर्गच्छति।

**विशेषटिप्पणी -**

कञ्चुकः परिच्छेदः अस्यास्तीति कञ्चुकी। कञ्चुकिलक्षणं नाट्यशास्त्रे तावत् -

"अन्तःपुरचरो वृद्धो विप्रो रूपगुणान्वितः।

सर्वकार्यार्थकुशलः कञ्चुकीत्यभिधीयते।।" इति। स्मितलक्षणं दर्पणे तु -

"ईषद्विकासिनयनं स्मितं स्यात्स्पन्दिताधरम्।" इति।

**व्याकरणविमर्शः -**

१. तातपरिजनस्य – तातस्य परिजनः तातपरिजनः, तस्य तातपरिजनस्य इति षष्ठीतत्पुरुषसमासः।

२. ऋष्यशृङ्गाश्रमात् - ऋष्यशृङ्गस्य आश्रम ऋष्यशृङ्गाश्रमः, तस्माद् ऋष्यशृङ्गाश्रमाद् इति षष्ठीतत्पुरुषसमासः।

## पाठगतप्रश्नाः - २

८. कस्य रामभद्र इत्युपचारः शोभते।

९. ऋष्यशृङ्गाश्रमात् क आगतः।

१०. कः रामं रामभद्र इति सम्बोधयति।

## १३.४) साम्प्रतं मूलपाठम् अवगच्छाम - १२

**(प्रविश्य)**

**अष्टावक्रः -** **स्वस्ति वाम्।**

**रामः -** **भगवन् ! अभिवादये इत आस्यताम्।**

**सीता -** **भअव णमो दे। अवि कुसलं सजामातुअस्स गुरुअणस्स अज्जाए सन्ताए अ। (भगवन्नमस्ते। अपि कुशलं सजामातृकस्य गुरुजनस्यार्यायाः शान्तायाश्च?)**

**रामः -** **निर्विघ्नः सोमपीथी आवुत्तो मे भगवानृष्यश्रृङ्गः, आर्या च शान्ताः ?**

**सीता -** **अम्हे वि सुमरेदि (अस्मानपि स्मरति?)**

**अष्टावक्रः -** **(उपविश्य) अथ किम्। देवि ! कुलगुरुर्भगवान् वसिष्ठस्त्वामिदमाह-**

**विश्वम्भरा भगवती भवतीमसूत**
**राजा प्रजापतिसमो जनकः पिता ते।**
**तेषां वधूस्त्वमसि नन्दिनि! पार्थिवानां**
**येषां कुलेषु सविता च गुरुर्वयं च॥९॥**

**तत्किमन्यदाशास्महे। केवलं वीरप्रसवा भूयाः।**

**अन्वयः -**

(प्रविश्य) **अष्टावक्रः** - वां स्वस्ति।

**रामः** - भगवन् ! अभिवादये इत आस्यताम्।

**सीता** - भगवन् ते नमः। अपि सजामातृकस्य गुरुजनस्य आर्यायाः शान्तायाः च कुशलम्?

**रामः** - मे आवुत्तः सोमपीथी भगवान् ऋष्यश्रृङ्गः निर्विघ्नः, आर्या च शान्ताः ?

**सीता** - अस्मान् अपि स्मरति?

**अष्टावक्रः** - (उपविश्य) अथ किम्। देवि ! कुलगुरुः भगवान् वसिष्ठः त्वाम् इदम् आह-

भगवती विश्वम्भरा भवतीम् असूत। प्रजापतिसमो राजा जनकः ते पिता। नन्दिनि तेषां पार्थिवानां त्वं वधूः असि, येषां कुलेषु सविता गुरुः वयं च (गुरवः)।

तत् अन्यत् किम् आशास्महे। केवलं वीरप्रसवाः भूयाः।

**अन्वयार्थः -**

(प्रविश्य प्रवेशं सम्पाद्य) **अष्टावक्रः** - वां युवाभ्यां स्वस्ति कुशलम् अविनाशः भवतात्।

**रामः** - भगवन् देव अभिवादये प्रणमामि। इतः अत्र आस्यताम् उपविश्यताम्।

**सीता** - भगवन् षडैश्वर्यशालिन् ते तुभ्यं नमः। अपि सजामातृकस्य जामात्रा सह गुरुजनस्य कौशल्याकैकेयीसुमित्राणाम् आर्यायाः शान्तायाः दशरथकन्यायाः अपि कुशलं सर्वं कुशलम् अस्ति खलु।

**रामः** - मे मम सोमपीथी सोमपानकर्ता आवुत्तः भगिनीपतिः भगवान् ऋष्यश्रृङ्गः आर्या शान्ता च निर्विघ्नः विघ्नरहितः (खलु)।

**सीता** - किं सा शान्ता अस्मान् अपि स्मरति चिन्तयति।

**अष्टावक्रः** - (उपविश्य उपवेशनं कृत्वा) (स्मरन्ति सर्वे भवन्तीम्। कुशलिनः सर्वे) अथ अधुना किम्। देवि हे राजमहिषि, कुलगुरुः भगवान् वसिष्ठः त्वां सीताम् इदम् एतत् आह अवोचत् -

भगवती षाड्गुण्यपरिपूर्णा विश्वम्भरा पृथिवी भवतीं सीताम् असूत प्रसूतवती। प्रजापतिसमो ब्रह्मसदृशः राजा नृपः जनकः विदेहापतिः ते तव पिता जनकः। नन्दिनि हे सौभाग्यवति, तेषां प्रसिद्धानां पार्थिवानां राज्ञां त्वं सीता वधूः कुलस्त्री असि भवसि, येषां राज्ञां कुलेषु वंशेषु सविता सूर्यः गुरुः पिता वंशप्रवर्तकः वयं च गुरवः हितोपदेष्टारः स्म।

तत् तस्मात् अन्यत् अपरं किम् आशास्महे इच्छामः। केवलं वीरप्रसवा वीरपुत्रका भूयाः भवतात्।

**व्याख्यानम् -**

ततः भगवान् अष्टावक्रः प्रविश्य ताभ्यां रामसीताभ्याम् आशीर्वादं दत्तवान् कल्याणम् अस्तु इति। रामः तस्य अभिवादनं कृत्वा आसनग्रहणाय तम् अनुरुद्धवान्। सीता च तस्य नमस्कारं कृत्वा जामातुः ऋष्यश्रृङ्गस्य तथा आर्यायाः शान्तायाः कुशलवार्ताम् अपृच्छत्। रामोऽपि भगिनीपतेः

ऋष्यशृङ्गस्य भगिन्याः च वार्तां पृष्टवान्। ततः सीतापि जिज्ञासितवती यत् तौ अपि किं रामं सीतां च स्मरतः इति। तानि वचनानि श्रुत्वा आसने च समुपविश्य महर्षिः अष्टावक्रः सीताम् उक्तवान् यत् तथैव भवति। ततः स कुलगुरुणा वसिष्ठेन सीतां प्रति यत् कथितं तत्सर्वं विज्ञापितवान् –

भगवती पृथिवी सीतां प्रसूतवती। किञ्च प्रजापतितुल्यः राजा जनकः सीतायाः पिता। अपि च सीता यस्य रघुवंशस्य कुलवधूः तस्य वंशस्य गुरुः भगवान् सूर्यः स्वयं वसिष्ठश्च। अस्मिन् श्लोके रघुवंशस्य प्रतापः औज्ज्वल्यं च वसिष्ठमुखेन प्रकाशितं कविना। अत्र सीतां प्रति भगवतः वसिष्ठस्य वचने सीतायाः सर्वथा एव कल्याणं भविष्यति इति सारः वर्तते। एवम् एतेषां महाचरितानां संयोगात् सीतायाः कदापि अशुभं न भविष्यति, सदा मङ्गलमेव भविष्यति इत्याशयः।

अतः सीता वीरपुत्रस्य जननी भविष्यतीति महर्षेः वशिष्ठस्य आशीर्वादः।

**विशेषटिप्पणी -**

अत्र ऋषिश्रेयोविधानरूपस्य वसिष्ठानुग्रहस्य बीजस्य बहूकरणात् परिकरः। तल्लक्षणं दर्पणे - "बीजस्य बहूकरणं परिकरः।" इति।

अष्टावक्रं प्रति भगवन् इति रामस्य सम्बोधनम्। भगवतः लक्षणं तावत्-

"उत्पत्तिं च स्थितिं चैव लोकानामगतिं गतिम्।

वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति।।" इति।

**व्याकरणविमर्शः -**

१. सजामातृकस्य- जामात्रा सहितः सजामातृकः तस्य सजामातृकस्य इति बहुव्रीहिसमासः।

२. सोमपीथी – पीथं नाम पानम्। सोमस्य पीथं सोमपीथम् इति षष्ठीतत्पुरुषसमासः। तद् अस्य अस्ति इति अर्थे सोमपीथशब्दात् अत इनिठनौ इति इनिप्रत्यये सोमोपीथी इति रूपम्

३. विश्वम्भरा- विश्वोपपदपूर्वकात् भृधातोः खच्प्रत्यये मुमागमे टापि विश्वम्भरा इति रूपम्।

**अलङ्कारविमर्शः -**

१. प्रजापतिसमः इत्यत्र उपमालङ्कारः। तल्लक्षणं तावत्- "साम्यं वाच्यमवैधर्म्यं वाक्यैक्य उपमा द्वयोः।" इति।

२. श्लोके येषां कुलेषु सविता गुरुर्वयं च इत्यत्र चेति शब्दोपादानात्समुच्चयः। तल्लक्षणं दर्पणे -

"समुच्चयोऽयमेकस्मिन् सति कार्यस्य साधके।

खले कपोतिकान्यायात्तत्करः स्यात्परोऽपि चेत्।

गुणौ क्रिये च युगपत् स्यातां यद्वा गुणक्रिये।।" इति।

३. जनकः पिता इत्यत्र पुनरुक्तवदाभासः। तल्लक्षणं दर्पणे -

"आपाततो यदर्थस्य पौनरुक्त्येन भासनम्।

पुनरुक्तवदाभासः स भिन्नाकारशब्दगः।।" इति।

**छन्दः** - विश्वम्भरा इत्यस्मिन् श्लोके वसन्ततिलकं छन्दः वर्तते। तल्लक्षणं तावद् - "उक्ता वसन्ततिलकं तभजा जगौ गः" इति।

## पाठगतप्रश्नाः - ३

११. सीतायाः माता का।

१२. सीतायाः पिता कः।

१३. सीता कस्य वंशस्य वधूः।

१४. सीतां प्रति वशिष्ठस्य क आशीर्वादः।

## १३.५) साम्प्रतं मूलपाठम् अवगच्छाम - १३

**रामः -** **अनुगृहीताः स्मः।**

**लौकिकानां हि साधूनामर्थं वागनुवर्तते।**<br>
**ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति ॥१०॥**

**अष्टावक्रः -** **इदं च भगवत्याऽरुन्धत्या देवीभिः शान्तया च भूयो भूयः संदिष्टम् - 'यः कश्चिद्गर्भदोहदो भवत्यस्याः सोऽवश्यमचिरात्सम्पादयितव्य' इति।**

**रामः-** **क्रियते यद्येषा कथयति।**

**अष्टावक्रः -** **ननान्दुः पत्या च देव्याः संदिष्टमृष्यशृङ्गेण - 'वत्से, कठोरगर्भेति नानीतासि। वत्सोऽपि रामभद्रस्त्वद्विनोदार्थमेव स्थापितः। तत्पुत्रपूर्णोत्सङ्गामायुष्मतीं द्रक्ष्यामः' इति।**

**रामः -** **(सहर्षलज्जास्मितम्) तथास्तु। भगवता वसिष्ठेन न किञ्चिदादिष्टोस्मि।**

**अन्वयः -**

**रामः** - अनुगृहीताः स्मः।

लौकिकानां साधूनां वाक् हि अर्थम् अनुवर्तते। पुनः आद्यानाम् ऋषीणां वाचम् अर्थः अनुधावति ॥१०॥

**अष्टावक्रः** - इदं च भगवत्या अरुन्धत्या देवीभिः शान्तया च भूयो भूयः सन्दिष्टम् - 'यः कश्चिद् अस्याः गर्भदोहदः भवति सः अवश्यम् अचिरात् सम्पादयितव्यः' इति।

**रामः**- एषा यत् कथयति क्रियते।

**अष्टावक्रः** - ननान्दुः पत्या ऋष्यशृङ्गेण च देव्याः सन्दिष्टम्- 'वत्से, कठोरगर्भा इति न आनीता असि। वत्सः अपि रामभद्रः त्वद्विनोदार्थम् एव स्थापितः। तत् पुत्रपूर्णोत्सङ्गाम् आयुष्मतीं द्रक्ष्यामः इति।

**रामः** - (सहर्षलज्जास्मितम्) तथा अस्तु। भगवता वसिष्ठेन न किञ्चिद् आदिष्टः अस्मि।

**अन्वयार्थः -**

**रामः** - अनुगृहीताः कृतार्थाः स्मः भवामः।

हि यतः लोकिकानां सामान्यानां साधूनां सतां वाक् वाणी अर्थं वस्तु अनुवर्तते अनुसरति। पुनः परन्तु आद्यानां वैदिकानां प्रधानानाम् ऋषीणाम् वशिष्ठादीनां वाचं वाणीम् अर्थं वस्तु अनुधावति अनुसरति।॥१०॥

**अष्टावक्रः** - इदं च भगवत्या देव्या अरुन्धत्या देवीभिः कौशल्याकैकेयीसुमित्राभिः शान्तया श्रीरामभगिन्या च भूयो भूयः वारं वारं सन्दिष्टम् आदिष्टम् - 'यः कश्चित् कोऽपि अस्याः सीताया गर्भदोहदः अभिलाषा भवति सः अवश्यं निश्चयेन अचिरात् अतिशीघ्रं सम्पादयितव्यः पूरणीयः' इति।

**रामः**- एषा सीता यत् यथा कथयति वदति तथा क्रियते सम्पाद्यते।

**अष्टावक्रः** - ननान्दुः पतिस्वसुः पत्या स्वामिना ऋष्यशृङ्गेण च देव्याः देवीं प्रति सन्दिष्टम् उक्तम् - 'वत्से कल्याणि, कठोरगर्भा पूर्णगर्भा इति न आनीता आहूता असि। वत्सः पुत्रः अपि रामभद्रः रामचन्द्रः त्वद्विनोदार्थं तव विनोदाय एव स्थापितः तत्र स्थितये आदिष्टः। तत् तस्मात् पुत्रपूर्णोत्सङ्गाम् सन्तानभूषितक्रोडाम् आयुष्मतीं चिरञ्जीविनीं द्रक्ष्यामः अवलोकयिष्यामः इति।

**रामः** - (सहर्षलज्जास्मितम् हर्षेण लज्जया स्मितहासेन च सहितम्) तथा एवम् अस्तु भवतु। भगवता कुलगुरुणा वसिष्ठेन न किञ्चिद् न किमपि कर्तुम् आदिष्टः अस्मि।

**व्याख्यानम् -**

सीता वीरपुत्रस्य जननी भविष्यतीति महर्षेः वशिष्ठस्य आशीर्वादं श्रुत्वा रामः आत्मानम् अनुगृहीतं मन्यते। स तदा महर्षीणाम् उत्कृष्टत्वं वर्णयति। लौकिकाः सामान्याः जनाः साधवः वा यत् भवति तदेव सर्वं वर्णयति। अर्थात् प्रत्यक्षीकृतस्य विषयस्य वर्णना एव तैः क्रियते। न कस्यापि अप्रत्यक्षस्य। किन्तु प्राचीनाः महर्षयः विपरीतम् एव आचरन्ति। ते यत् कथयति तत् सर्वमेव भाविनि काले भविष्यति। अनेन तेषां दूरदर्शिता ज्ञायते। अतः महर्षिः वसिष्ठः यत् सीतायां वीरपुत्रस्य जन्म भविता इति अवदत् तत् सत्यमेव भाविकाले सम्भविष्यति इति श्रीरामस्याशयः।

ततः अष्टावक्रः वसिष्ठपत्न्या अरुन्धत्या रामस्वस्रा शान्तया मातृभिः कौशल्याकैकेयीसुमित्राभिः च रामं प्रति प्रेषितं सन्देशं वर्णयति। सम्प्रति सीता गर्भवती अस्ति। अतः अस्याम् अवस्थायां तस्याः सर्वविधाः अभिलाषाः रामेण त्वरा पालनीयाः। रामः सहासं तेषाम् आदेशम् अङ्गीकरोति।

महर्षिः ऋष्यशृङ्गः अष्टावक्रमुखेन यज्ञस्थानं प्रति सीता कथं न आनीता इति ज्ञापयति। स वदति यत् सीता इदानीं पूर्णगर्भा अस्ति। अतः आगमने क्लेशः सम्भविष्यति इति विचिन्त्य सा न आनीता। वत्सः रामचन्द्रः अपि सीतायाः मनोरञ्जनाय एव अयोध्यायां तिष्ठति। ततश्च स ससुताम् आयुष्मतीं सीतां द्रष्टुं आगमिष्यति परमिति ऋष्यशृङ्गमुनेः आश्वासनम्। रामः तत्सर्वं श्रुत्वा वसिष्ठेन तं प्रति कश्च उपदेशः प्रदत्तः न वा इति पृच्छति।

**विशेषटिप्पणी -**

अत्र लौकिकानामिति श्लोके ऋषिश्रेयोविस्तरणरूपस्य बीजगुणस्य वर्णनाद् विलोभनं नाम सन्ध्यङ्गं भवति। तल्लक्षणं तावद् - "बीजगुणवर्णनं विलोभनम्" इति।

**व्याकरणविमर्शः -**

१. लौकिकानाम् - लोके भवा लौकिकाः। अत्र लोकात् ठञ्प्रत्ययः। लौकिकशब्दस्य षष्ठीबहुवचने लौकिकानामिति रूपम्।

२. आद्यानाम् - आदौ भवाः आद्याः। आदिशब्दाद् यत्प्रत्यये आद्यशब्दो निष्पन्नः। तस्य षष्ठीबहुवचने आद्यानाम् इति रूपम्।

३. ऋषीणाम् - ऋष गताविति धातुः। ऋष्धातोः "सर्वधातुभ्य इन्" इति सूत्रेण इन्प्रत्यये, "इगुपधात् कित्" इति सूत्रेण किति च ऋषिशब्दो निष्पन्नः। तस्यैव षष्ठीबहुवचने ऋषीणामिति रूपम्।

४. सन्दिष्टम् - सम्-पूर्वकात् दिश्धातोः क्तप्रत्यये नपुंसके सन्दिष्टम् इति रूपम्।

५. सम्पादयितव्यम् - सम्पूर्वकात् पद्धातोः णिचि तव्यति नपुंसके सम्पादयितव्यम् इति रूपम्।

६. कठोरगर्भा - कठोरः गर्भः यस्याः सा कठोरगर्भा इति बहुव्रीहिसमासः।

७. पुत्रपूर्णोत्सङ्गाम् - पुत्राभ्यां पूर्णः पुत्रपूर्णः इति तृतीयातत्पुरुषसमासः। पुत्रपूर्णः उत्सङ्गः यस्याः सा पुत्रपूर्णोत्सङ्गा इति बहुव्रीहिसमासः, ताम्।

छन्दः-

१. लौकिकानाम् इति श्लोके अनुष्टुप् छन्दः।

**अलङ्कारविमर्शः -**

१. लौकिकानाम् इति श्लोके लौकिकानां साधूनाम् अपेक्षया आद्यानाम् ऋषीणां वचसाम् आधिक्यवचनाद् व्यतिरेकालङ्कारः। तल्लक्षणं दर्पणे -

"आधिक्यमुपमेयस्योपमानान्न्यूनताऽथवा। व्यतिरेकः" इति।

## पाठगतप्रश्नाः - ४

१५. केषां वाचम् अर्थः अनुधावति।

१६. केषाम् अर्थं वाग् अनुवर्तते।

१७. अरुन्धत्याः रामस्य जननीनां शान्तायाश्च रामं प्रति क आदेशः।

१८. सीता कुतः यज्ञं प्रति नानीता।

१९. रामः कथम् अयोध्यायां स्थापितः।

२०. ऋष्यशृङ्गः सीतां कीदृशीं द्रष्टुमिच्छति



## १३.६) साम्प्रतं मूलपाठम् अवगच्छाम - १४

अष्टावक्रः - श्रूयताम्।

जामातृयज्ञेन वयं निरुद्धा-<br>स्त्वं बाल एवासि नवं च राज्यम्।<br>युक्तः प्रजानामनुरञ्जने स्या-<br>स्तस्माद्यशो यत्परमं धनं वः॥११॥

रामः - यथा समादिशति भगवान्मैत्रावरुणिः।

स्नेहं दयां च सौख्यं च यदि वा जानकीमपि।<br>आराधनाय लोकस्य मुञ्चतो नास्ति मे व्यथा ॥ १२ ॥

सीता- अदो जेव्व राहवधुरन्धरो अज्जउत्तो। (अत एव राघवधुरन्धर आर्यपुत्रः।)

रामः - कः कोऽत्र भोः। विश्राम्यतामष्टावक्रः।

अष्टावक्रः- (उत्थाय परिक्रम्य च) अये कुमारलक्ष्मणः प्राप्तः।

(इति निष्क्रान्तः)

**अन्वयः -**

**अष्टावक्रः** - श्रूयताम्।

वयं जामातृयज्ञेन निरुद्धाः त्वं बाल एव असि च राज्यं नवम् (अत एव) प्रजानाम् अनुरञ्जते युक्तः स्याः तस्मात् यशः वः परमं धनम् (अस्ति)।।११।।

**रामः** - भगवान् मैत्रावरुणिः यथा समादिशति।

लोकस्य आराधनाय स्नेहं दयां सौख्यं च यदि वा जानकीम् अपि मुञ्चतो मे व्यथा न अस्ति॥ १२॥

**सीता** - अत एव आर्यपुत्रः राघवधुरन्धरः।

**रामः** - कः कः अत्र भोः। अष्टावक्रः विश्राम्यताम्।

**अष्टावक्रः**- (उत्थाय परिक्रम्य च) अये कुमारलक्ष्मणः प्राप्तः।

(इति निष्क्रान्तः)

**अन्वयार्थः -**

**अष्टावक्रः** - श्रूयताम् आकर्ण्यताम्।

वयं वसिष्ठादयः जामातृयज्ञेन ऋष्यशृङ्गस्य द्वादशवर्षव्यापिना यज्ञेन निरुद्धाः उपरुद्धाः स्मः। त्वं रामः बालः कुमारः राज्यशासने अप्रौढः च असि। राज्यं नवम् नूतनम् अस्ति। अतः प्रजानां लोकानाम्

अनुरञ्जने अनुरागोत्पादने युक्तः तत्परः स्याः भवेः। तस्मात् अनुरागोत्पादनात् यशः कीर्तिर्भविष्यति, यद् यशः वः युष्माकं परमं सर्वोत्कृष्टं धनम् सम्पत्।।११।।

**रामः** - भगवान् षडैश्वर्यसम्पन्नः मैत्रावरुणिः वसिष्ठमहर्षिः यथा समादिशति यथा आज्ञापयति तथैव करिष्यामीति भावः।

लोकस्य जनस्य आराधनाय प्रसादनाय स्नेहम् अनुरागं, दयां करुणां, सौख्यं सुखं च यदि वा जानकीम् अपि सीताम् अपि मुञ्चतः त्यजतः मे मम व्यथा दुःखं न अस्ति न भवति॥१२॥

**सीता**- अत एव अस्मात् कारणाद् आर्यपुत्रः मम स्वामी राघवधुरन्धरः रघुकूलशिरोमणिः।

**रामः** - कः कः अत्र भोः अत्र कः अस्ति। अष्टावक्रः विश्राम्यतां अष्टावक्रस्य विश्रामप्रबन्धः सम्पाद्यताम्।

**अष्टावक्रः**- (उत्थाय परिक्रम्य च) अये कुमारलक्ष्मणः प्राप्तः आगतः।

(इति निष्क्रान्तः एवमुक्त्वा निर्गतः)

### व्याख्यानम् -

अत्र वसिष्ठः रामाय राज्यशासनविषयकम् उपदेशं ददाति। ऋष्यशृङ्गस्य यज्ञम् उपलक्ष्य राज्यस्य सर्वे एव प्रौढाः जनाः स्वयं कुलगुरुः वसिष्ठः च तत्र सन्ति। अतः तेषाम् आगमने विलम्बः भविष्यति। रामस्य च सम्प्रति एव राज्याभिषेकः अभवत्। अतः राज्यशासनविषये सः अधुनापि अनभिज्ञः अस्ति। रघुवंशीयानां नृपाणां यशः एव परमम् अभीष्टं वर्तते। अतः कीर्तिलाभाय सततं प्रजामनसाम् अनुरञ्जने तत्परः भवितव्यः। यथा प्रजाः नृपे सन्तुष्टाः भवेयुः इत्यस्मिन् विषये ध्यानं देयम्। तेनैव रामः यथार्थः प्रजापालकः राजा भवितुं शक्नुयात् इति वसिष्ठस्य अभिप्रायः। भाविनि काले प्रजानाम् अनुरागम् उत्पादयितुं रामेण सीतापरित्यागः करिष्यते इति घटनानिर्देशः अत्र प्राप्यते।

रामः वसिष्ठेन यथा आदिष्टं तथा एव कर्तुं प्रतिज्ञां कृतवान्। प्रजापालनाय स सर्वम् अपि कर्तुं समर्थः। तस्य कृते स स्नेहं दयां सौख्यं सर्वम् अपि परित्यक्तुं प्रस्तुतः। अपि च जनानाम् आराधनाय यदि धर्मपत्नी जानकी अपि त्यक्तव्या भवति तर्हि अपि तस्य किञ्चिदपि दुःखं न भविष्यति। अनेन श्रीरामस्य प्रजावात्सल्यं गुरुवचने श्रद्धा च प्रकाशिता भवति। अपि च भाविनि काले प्रजानां कृते सीता अपि परित्यक्ष्यते इति द्योत्यते।

प्रजापालनविषयिणीं रामस्य प्रतिज्ञाम् आकर्ण्य सीता स्वभर्तारं रामं प्रशंसन्ती अवदत् यद् अस्मात् कारणाद् एव श्रीरामः रघुकुलस्य श्रेष्ठः। रामः ततः भगवतः अष्टावक्रस्य विश्रामव्यवस्थाकरणाय आदिष्टवान्। तदनन्तरं भगवान् अष्टावक्रः विश्रामात् उत्थाय तत्र परिक्राम्यति। तदा तत्र लक्ष्मणः उपस्थितः। तं दृष्ट्वा अष्टावक्रः ' कुमारलक्ष्मणः प्राप्तः ' इत्युक्त्वा निष्क्रान्तः।

**विशेषटिप्पणी -**

अत्र जामातैयज्ञेनेति श्लोके प्रजानुरञ्जनाद् प्राप्तं यशः परमं धनमित्यादिना सीतानिर्वासनरूपं बीजमुक्तम्। तल्लक्षणं तावद् दर्पणे –

"अल्पमात्रं समुद्दिष्टं बहुधा यद्विसर्पति।

फलस्य प्रथमो हेतुर्बीजं तदभिधीयते।।" इति।

**व्याकरणविमर्शः -**

१. जामातृयज्ञेन – जामातुः यज्ञः जामातृयज्ञः इति षष्ठीतत्पुरुषसमासः, तेन जामातृयज्ञेन।

२. अनुरञ्जने - अनुपूर्वकात् रञ्ज्धातोः ल्युटि सप्तम्येकवचने अनुरञ्जने इति रूपम्।

३. सौख्यम् – सुखस्य भावः इत्यर्थे ष्यञ्प्रत्यये सौख्यम् इति रूपम्।

४. मुञ्चतः - मुच्-धातोः शतरि षष्ठ्येकवचने मुञ्चतः इति रूपम्।

५. मैत्रावरुणिः - मित्रश्च वरुणश्च मित्रावरुणौ इति इतरेतरद्वन्द्वसमासः। मित्रावरुणयोः अपत्यं पुमान् इति विग्रहे "बाह्वादिभ्यश्च" इति इञ्प्रत्यये मैत्रावरुणिः इति रूपम्।

**छन्दः -**

१. जामातृयज्ञेन इत्यस्मिन् श्लोके इन्द्रवज्राछन्दः वर्तते। तल्लक्षणम् उक्तं - स्यादिन्द्रवज्रा यदि तौ जगौ गः। इति।

२. स्नेहमिति श्लोके अनुष्टुप् छन्दः।

## पाठगतप्रश्नाः - ५

२१. वसिष्ठादयः केन निरुद्धाः।

२२. रघुवंशीयानां परमं धनं किम्।

२३. जामातृयज्ञेनेति श्लोके किं छन्दः वर्तते। तस्य लक्षणं किम्।

२४. मैत्रावरुणिः इति रूपं साधयत।

२५. लोकस्य आराधनाय रामः किं किं त्यक्तुं प्रस्तुतः।

२६. राज्ञः प्रधानः धर्मः कः।

## १३.७) साम्प्रतं मूलपाठम् अवगच्छाम - १५

**(प्रविश्य)**

**लक्ष्मणः-** **जयति जयत्यार्यः। आर्य! अर्जुनेन चित्रकरेणास्मदुपदिष्टमार्यस्य चरितमस्यां वीथ्यामभिलिखितम्। तत्पश्यत्वार्यः।**

**रामः-** **जानासि वत्स! दुर्मनायमानां देवीं विनोदयितुम्। तत्कियन्तमवधिं यावत्।**

**लक्ष्मणः-** **यावदार्याया हुताशनशुद्धिः।**

**रामः-** **शान्तं पापम् (ससान्त्ववचनम्।)**

**उत्पत्तिपरिपूतायाः किमस्याः पावनान्तरैः।**
**तीर्थोदकं च वह्निश्च नान्यतः शुद्धिमर्हतः ॥१३॥**

**देवि देवयजनसम्भवे ! प्रसीद। एष ते जीविताववधिः प्रवादः।**

**क्लिष्टो जनः किल जनैरनुरञ्जनीय-**
**स्तन्नो यदुक्तमशुभं च न तत्क्षमं ते।**
**नैसर्गिकी सुरभिणः कुसुमस्य सिद्धा**
**मूर्ध्नि स्थितिर्न चरणैरवताडनानि॥१४॥**

### अन्वयः -

(प्रविश्य) **लक्ष्मणः** - आर्यः जयति जयति। आर्य! अर्जुनेन चित्रकरेण अस्मदुपदिष्टम् आर्यस्य चरितम् अस्यां वीथ्याम् अभिलिखितम्। तत् आर्यः पश्यतु।

**रामः**- वत्स! दुर्मनायमानां देवीं विनोदयितुं जानासि । तत् कियन्तम् अवधिं यावत्।

**लक्ष्मणः**- आर्याया हुताशनशुद्धिः यावत्।

**रामः**-शान्तं पापम् (ससान्त्ववचनम्।)

उत्पत्तिपरिपूतायाः अस्याः पावनान्तरैः किम्। तीर्थोदकं च वह्निश्च अन्यतः न शुद्धिम् अर्हतः ॥ १३॥

देवयजनसम्भवे देवि, प्रसीद। एष प्रवादः ते जीविताववधिः।

क्लिष्टः जनः जनैः अनुरञ्जनीयः किल, तत् ते नः यद् अशुभम् उक्तं तत् न क्षमम्। सुरभिणः कुसुमस्य मूर्ध्नि स्थितिः नैसर्गिकी सिद्धा, चरणैः अवताडनानि न॥१४॥

### अन्वयार्थः -

(प्रविश्य प्रवेशं सम्पाद्य) **लक्ष्मणः** - आर्यः जयति जयति महाराज, भवतः सदा विजयः। आर्य महाराज! अर्जुनेन चित्रकरेण अर्जुननामकेन चित्रकारिणा अस्मदुपदिष्टम् अस्माभिः उपवर्णितम् आर्यस्य श्रीरामस्य चरितं जीवनम् अस्यां वीथ्याम् अस्यां चित्रमयश्रेण्याम् अभिलिखितम् अङ्कितम्। तत् चित्रम् आर्यः रामचन्द्रः पश्यतु अवलोकयतु।

**रामः** - वत्स प्रिय! दुर्मनायमानां दुःखितमानसां देवीं सीतां विनोदयितुं सन्तोषयितुं जानासि शक्नोषि। तत् चित्रम् कियन्तम् अवधिं यावत् कियत्पर्यन्तम्।

**लक्ष्मणः** - आर्यायाः सीतायाः हुताशनशुद्धिः यावत् अग्निपरीक्षणपर्यन्तम्।

**रामः** - शान्तं पापम् त्वया एवं पुनः नैव वक्तव्यम् (ससान्त्ववचनम् अत्यन्तमधुरवचःसहितम्)

उत्पत्तिपरिपूतायाः उत्पत्त्या जन्मना एव परिपूतायाः अयोनिजत्वात् पवित्रायाः शुद्धाया अस्याः सीतादेव्याः पावनान्तरैः अग्न्यादिपवित्रताजनकैः किं किं प्रयोजनम्। तीर्थोदकं गङ्गादितीर्थजलं च वह्निश्च अग्निश्च अन्यतः अन्यस्मात् शुद्धिं पवित्रतां न अर्हतः सम्पादयितुं न योग्यौ भवतः।॥१३॥

देवयजनसम्भवे देवयज्ञसमुत्पन्ने देवि भगवति, प्रसीद प्रसन्ना भव। एषः अयं ते तव जीविताविधिः आजीवनं प्रवादः लोकापवादः।

क्लिष्टः दुःखितः जनः लोकः जनैः अन्यलोकैः अनुरञ्जनीयः आराधनीयः किल निश्चयेन। तत् तस्मात् ते तव नः आवयोः विषये यत् अशुभम् अशिवम् तत् कथनं न क्षमम् न युक्तम् नोचितम्। सुरभिणः सुगन्धितस्य कुसुमस्य पुष्पस्य मूर्ध्नि मस्तके स्थितिः अवस्थानम् नैसर्गिकी स्वाभाविकी सिद्धा लोके प्रसिद्धा, परन्तु चरणैः पादैः अवताडनानि चरणमर्दनानि प्रहाराः वा न नैसर्गिकाणि न स्वाभाविकानि॥ १४॥

**व्याख्यानम् -**

लक्ष्मण आगत्य रामस्य विजयप्रशस्तिमुक्त्वा तस्मै निवेदयति यत् यथादिष्टं रामजीवनवृत्तान्तस्य चित्राङ्कनम् अर्जुननामकेन चित्रकारेण सम्पन्नम्। अत चित्रमिदं भवान् किञ्चित् पश्यतु इति रामं प्रार्थयति लक्ष्मणः। ततः रामः लक्ष्मणम् वदति यत् सीता पितृविरहे विषण्णचित्ता वर्तते, तस्मात् दुःखितायाः तस्या विनोदाय त्वं समर्थः। ततः स लक्ष्मणम् पृच्छति यत् चित्रमिदं किं पर्यन्तम् चित्रितम् इति। तदा लक्ष्मणः उत्तरं प्रदत्तवान् यत् - देव्या सीतायाः अग्निपरीक्षापर्यन्तं चित्रस्य अस्य व्याप्तिः। लक्ष्मणवचनं श्रुत्वा अप्रसन्नः रामः सुमधुरम् वदति तादृशं वाक्यं न वाच्यम्।

आजन्मशुद्धायाः सीतायाः शुद्धतायाः परीक्षायै अन्येन केनचित् द्रव्येण प्रयोजनं नास्ति। यथा तीर्थस्य जलं वह्निः च इत्यनयोः अन्यैः द्रव्यैः शुद्धीकरणस्य प्रयोजनं न भवति तयोः शुद्धत्वात् तथैव चिरशुद्धायाः सीतायाः अग्निना शुद्धिः नापेक्षते। स्वतः शुद्धत्वात् अन्यतः शुद्धिसम्पादनं नावश्यकमिति भावः।

ततः सीता प्रति रामः कथयति यत् सा यथा प्रसन्ना भवेत्। अयं लोकापवादः तस्या आजीवनमेव। ततो रामो वदति यत् ये जनास्तावत् स्वकुलस्य रक्षां कुर्वन्ति, तैः दुःखितजनाः न तिरस्कर्तव्याः अपि तु अवश्यम् अनुरञ्जनीयाः। अतः दुःखितायाः तव विषये यानि अशुभवाक्यानि प्रयुक्तानि तानि न युक्तानि इति भावयामि। प्रसङ्गस्य स्पष्टीकरणाय दृष्टान्तः प्रदीयते। सुरभिविशिष्टानां कुसुमानां पादैः मर्दनं न योग्यम्। यतो हि तेषां मस्तके अवस्थानं स्वाभाविकं भवति इति तात्पर्यम्।

**व्याकरणविमर्शः -**

१. दुर्मनायमानाम्- दुःस्थितं मनः यस्याः सा दुर्मनाः इति बहुव्रीहिसमासः। अदुर्मनाः दुर्मनाः भवति इत्यर्थे क्यङ्प्रत्यये निष्पन्नाद् दुर्मनायधातोः शानच्प्रत्यये टापि दुर्मनायमाना इति भवति। ततः द्वितीयैकवचने दुर्मनायमानाम् इति रूपम्।

२. उत्पत्तिपरिपूतायाः - उत्पत्त्या परिपूता उत्पत्तिपरिपूता इति तृतीयातत्पुरुषसमासः, तस्याः उत्पत्तिपरिपूतायाः।

३. पावनान्तरैः – पावयन्ति इति पावनानि। अन्यानि पावनानि पावनान्तराणि तैः इति पावनान्तरैः इति मयूरव्यंसकादिवत्समासः।

४. तीर्थोदकम् - तीर्थस्य उदकं तीर्थोदकम् इति षष्ठीतत्पुरुषसमासः।

५. अनुरञ्जनीयः– अनुपूर्वकात् रञ्जधातोः णिच्प्रत्यये अनीयर्प्रत्यये च अनुरञ्जनीय इति रूपम्।

६. नैसर्गिकी - निसर्गाद् आगता इत्यर्थे निसर्गशब्दात् ठकि ङीपि नैसर्गिकीशब्दो निष्पद्यते।

७. स्थितिः - स्थाधातोः क्तिन्प्रत्यये स्थितिशब्दो निष्पद्यते।

**छन्दः -**

१. उत्पत्तिपरिपूताया इत्यस्मिन् श्लोके अनुष्टुप् छन्दः।

२. क्लिष्टो जनः इति श्लोके वसन्ततिलकं छन्दः।

अलङ्कारविमर्शः-

१. उत्पत्तिपरिपूतायाः इत्यस्मिन् श्लोके तीर्थोदकवह्निदृष्टान्तेन सीतायाः पवित्रतासमर्थनाद् दृष्टान्तालङ्कारः। तल्लक्षणम् उक्तं दर्पणे- “दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनम्।” इति।

२. क्लिष्टो जनः इत्यस्मिन् श्लोके अपि दृष्टान्तालङ्कारः।

## पाठगतप्रश्नाः - ६

२७. चित्रकारस्य किम् अभिधानम्।

२८. रामचरितं कियद् वीथिकायाम् अभिलिखितम्।

२९. किं किं स्वतः एव पवित्रं भवति।

३०. सीतायाः कैः प्रयोजनं नास्ति।

३१. क्लिष्टं जनं प्रति किं कर्तव्यम्।

३२. कुसुमस्य का नैसर्गिकी।



## पाठसारः

भूमिसुता सीता वैदही रामपत्नी सीता आसीना। रामः सीतां सान्त्वयितुमनाः प्रविशति। तस्मिन्नेव समये ऋष्यशृङ्गमुनेः आश्रमाद् वसिष्ठादीनां संवादं स्वीकृत्य भगवान् अष्टावक्रः आगतः। स वसिष्ठादीनां सन्देशं श्रावयन् कथयति यत् महर्षिः वसिष्ठः सीतायै आशीर्वादं प्रदत्तवान् - सा वीरप्रसवा भूयाः इति। वसिष्ठपत्नी अरुन्धती राममातरः कौशल्याकैकेयीसुमित्राः शान्ता च रामं प्रति उक्तवत्यः यत् - सीता गर्भवती अस्ति, अतः इदानीं रामेण तस्याः सर्वा अभिलाषाः शीघ्रं पूरणीयाः। महर्षिः ऋष्यशृङ्गः अवदत् यत् कठोरगर्भत्वात् सीता यज्ञस्थानं प्रति आगन्तुं न समर्था। अतः स परं सपुत्रां तां द्रष्टुम् अयोध्याम् आगमिष्यति इति। कुलगुरुः वसिष्ठः रामम् आदिष्टवान् यत् प्रजाः यथा सुखिनः स्युः तथा राज्यपालनं कर्तव्यम्। यतो हि तेन एव रघुवंशीयानाम् अभीष्टं यशः प्राप्तुं शक्नुयात्। आदेशं श्रुत्वा रामः कथयति यत् प्रजानां सुखाय स स्नेहस्य दयायाः सौख्यस्य धर्मपत्न्याः सीताया अपि परित्यागं कर्तुं सन्नद्धः अस्ति। अनेन एव श्रीरामवचनेन स भाविकाले सीतां परित्यक्ष्यति इति सूचितो भवति। ततः कुमारः लक्ष्मणः प्रविशति। महर्षिः अष्टावक्रः विश्रामस्वीकाराय गच्छति। लक्ष्मणः कथयति यत् यथादिष्टं तथा एव रामचरितात्मकं चित्रपटम् अङ्कयित्वा चित्रकारः आगतः इति। ततः रामः लक्ष्मणं पृच्छति यत् एतस्य चित्रस्य व्याप्तिः कियत्पर्यन्तम्। तदा लक्ष्मणः वदति यत् सीतायाः अग्निशुद्धिपर्यन्तं तत्र चित्रितम् अस्ति इति। ततश्च रामः सीतायाः आजन्मशुद्धतां वर्णयति। यथा तीर्थजलं वह्निः च स्वतः पवित्रं तथा सीता अपि स्वतः पवित्रा। अतः रामः सीतायाः खेदो मा भवेदिति कथयति। यः क्लिष्टः जनो भवति तस्य क्लेशनिवारणमेव उचितम्, अतः सीतां प्रति लक्ष्मणस्य वचनं न योग्यम्। यतो हि कुसुमस्य स्वाभाविकम् अवस्थानं शिरसि एव भवति, न तु पादैः लेहनं तस्य उचितम्। एवं प्रकारेण अयं पाठः समाप्यते।

## पाठान्तप्रश्नाः

१. किन्त्वनुष्ठाननित्यत्वमिति श्लोकं व्याख्यात।
२. गुरुजनैः रामं प्रति उक्तान् उपदेशान् लिखत।
३. विश्वम्भरा इत्यादिश्लोकं व्याख्यात।
४. लौकिकानां साधूनाम् आद्यानां च ऋषीणां कः भेदः - तत् लौकिकानाम् इत्यादिश्लोकव्याख्यानपुरःसरं वर्णयत।
५. सीतायाः आजन्मपवित्रताविषये श्रीरामेण किम् उक्तम्।
६. जामातृयज्ञेनेति श्लोकं व्याख्यात।
७. स्नेहं दयां च सौख्यम् इति श्लोकं व्याख्यात।

## पाठगतप्रश्नानामुत्तराणि

१. अनुष्ठाननित्यत्वं गृहस्थानां स्वातन्त्र्यम् अपकर्षति।

२. किन्तु अनुष्ठाननित्यत्वम् इति सन्धिविच्छेदः।

३. कर्म त्रिविधं भवति - नित्यं नैमित्तिकं काम्यं च।

४. आहिताग्नीनां गृहस्थता प्रत्यवायैः सङ्कटा भवति।

५. बन्धुजनविप्रयोगाः सन्तापकारिणः भवन्ति।

६. संसारभावाः हृदयमर्मच्छिदो भवन्ति।

७. हृदमर्मच्छिद्भ्यः संसारभावेभ्यः विरक्ता मनीषिणः सर्वान् कामान् सन्त्यज्य अरण्ये विश्राम्यन्ति।

८. तातपरिजनस्य रामभद्र इत्युपचारः शोभते।

९. ऋष्यशृङ्गाश्रमाद् अष्टावक्रमुनिः आगतः।

१०. कञ्चुकी रामं रामभद्र इति सम्बोधयति।

११. सीतायाः माता का विश्वम्भरा पृथिवी।

१२. सीतायाः प्रजापतिसमः जनकः पिता।

१३. येषां वंशे सविता वंशप्रवर्तकः वसिष्ठादयश्च आचार्याः तेषां वंशस्य सीता वधूः।

१४. सीतां प्रति वशिष्ठस्य "वीरप्रसवाः भूयाः" इति आशीर्वादः।

१५. आद्यानाम् ऋषीणां वाचम् अर्थः अनुधावति।

१६. लौकिकानां साधूनाम् अर्थं वाग् अनुवर्तते।

१७. अरुन्धत्याः रामस्य जननीनां शान्तायाश्च रामं प्रति आदेशः अयं यद् इदानीं सीता पूर्णगर्भा, अतस्तस्य सर्वा अभिलाषाः रामेण शीघ्रमेव पूरणीयाः इति।

१८. सीता कठोरगर्भा इत्यतः यज्ञं प्रति नानीता।

१९. रामः सीताया विनोदाय अयोध्यायां स्थापितः।

२०. ऋष्यशृङ्गः सीतां पुत्रपूर्णक्रोडां द्रष्टुमिच्छति।

२१. वसिष्ठादयः जामातुः ऋष्यशृङ्गस्य यज्ञेन निरुद्धाः।

२२. रघुवंशीयानां प्रजानुरञ्जनात् प्राप्तं यशः परमं धनम्।

२३. जामातृयज्ञेनेति श्लोके इन्द्रवज्राछन्दः वर्तते। तस्य लक्षणं तावत् - "स्यादिन्द्रवज्रा यदि तौ जगौ गः" इति।

२४. मित्रश्च वरुणश्च मित्रावरुणौ इति इतरेतरद्वन्द्वसमासः। तयोः अपत्यं पुमान् इति विग्रहे "बाह्वादिभ्यश्च" इत्यनेन इञ्प्रत्यये मैत्रावरुणिः इति रूपम्।

२५. लोकस्य आराधनाय रामः स्नेहं दयां सौख्यं जानकीमपि त्यक्तुं प्रस्तुतः।

२६. राज्ञः प्रधानः धर्मः प्रजानाम् आराधनम्।

२७. चित्रकारस्य अर्जुनः इत्यभिधानम्।

२८. रामचरितं सीतायाः हुताशनशुद्धिं यावद् वीथिकायाम् अभिलिखितम्।

२९. तीर्थोदकम् अग्निश्च स्वतः एव पवित्रं भवति।

३०. सीतायाः पावनान्तरैः प्रयोजनं नास्ति।

३१. क्लिष्टः जनः तत्सम्बन्धिभिः क्लेशं विस्मार्य अनुरञ्जनीयः।

३२. कुसुमस्य शिरसि स्थितिः नैसर्गिकी।

॥ इति त्रयोदशः पाठः ॥

# १४

# उत्तररामचरितम् - चित्रदर्शनम् - १

## प्रस्तावना

अस्मिन् पाठे चित्रदर्शनम् आरभते। श्रीरामः लक्ष्मणेन सह चित्रं नीत्वा सीतायाः समीपं गतः। तत्र गत्वा रामः सीतायाः सन्तोषार्थं लोकापवादविषये निन्दाम् करोति। ततः ते चित्रदर्शनं प्रारभन्ते। ताटकराक्षस्याः निधनवृत्तान्तात् तानि चित्राणि अङ्कितानि सन्ति। ततश्च ते वृत्तक्रमेण चित्राणि पश्यन्ति किञ्च चित्रविषये स्वाभिमतं प्रकाशयन्ति। तत्र मिथिलावृत्तान्तः, तेषां विवाहः, विवाहात् परम् अयोध्याप्राप्तिः, तत्कालीनं तेषां जीवनं च चित्रमाध्यमेन सम्यक् प्रकाशितं वर्तते। अस्मिन् चित्रदर्शनप्रसङ्गे कविः सीतामुखेन श्रीरामं राममुखेन च सीतां वर्णयति। एवं चित्रदर्शनेन कविः सम्पूर्णस्य अपि रामायणस्य वृत्तान्तानि स्मारयितुं चेष्टते। अस्मिन् पाठे वयं तस्य एव चित्रदर्शनस्य कञ्चिद् भागं पठामः।

## उद्देश्यानि

अमुम् पाठं पठित्वा भवान् -

- रामसीतयोः शरीरसौन्दर्यादिकं जानीयात्।
- चित्रदर्शनमाध्यमेन सम्पूर्णस्य अपि रामायणस्य घटनाक्रमं ज्ञातुं शक्नुयात्।
- छन्दसां लक्षणानि जानीयात्।
- श्लोकानाम् अन्वयं प्रतिपदार्थादिकं च अवगच्छेत्।
- दीर्घानां पदानां विग्रहवाक्यं समासं च बोद्धुं समर्थः भवेत्।

## १४.१) सम्पूर्णः मूलपाठः

**सीता -** **होदु अज्जौत्त होदु। एहि। पेक्खह्म दाव दे चरिदम्। (भवत्वार्यपुत्र भवतु। एहि। प्रेक्षामहे तावत्ते चरितम्।)**

**(इत्युत्थाय परिक्रामति)**

**लक्ष्मणः -** **इदं तदालेख्यम्।**

**सीता -** **(निर्वर्ण्य) के एदे उवरिणिरन्तरदा उवत्थुवन्दि विअ अज्जउत्तम् (क एते उपरि निरन्तरस्थिता उपस्तुवन्तीवार्यपुत्रम्।)**



लक्ष्मणः - देवि ! एतानि तानि सरहस्यानि जृम्भकास्त्राणि यानि भगवतः कृशाश्वात्कौशिकमृषिमुपसंक्रान्तानि। तेन ताटकावधे प्रसादीकृतान्यार्यस्य।

रामः - वन्दस्व देवि, दिव्यास्त्राणि।

ब्रह्मादयो ब्रह्महिताय तप्त्वा
परःसहस्रं शरदां तपांसि।
एतान्यपश्यन्गुरवः पुराणाः
स्वान्येव तेजांसि तपोमयानि॥१५॥

सीता- णमो एदारणम्। (नम एतेभ्यः)

रामः- सर्वथेदानीं त्वत्प्रसूतिमुपस्थास्यन्ति।

सीता- अणुगहीदह्मि। (अनुगृहीतास्मि।)

लक्ष्मणः - एष मिथिलावृत्तान्तः।

सीता -अम्महे, दलन्तणवणीलुप्पलसिणिद्धमसिणसोहमाणमंसलेन देहसोहग्गेण विह्मअत्थिमिदतादद्दीसन्तसोम्मसुन्दरसिरौ अणादरखंडिदसङ्करसरासणो सिहण्डमुद्धमुहमुण्डलो अज्जउत्तो आलिहिदो। (अहो, दलन्नवनीलोत्पलश्यामलस्निग्धमसृणशोभमानमांसलेन देहसौभाग्येन विस्मयस्तिमितताातदृश्यमानसौम्यसुन्दरश्रीरनादरत्रुटितशंकरशरासनः शिखण्ड मुग्धमुखमण्डल आर्यपुत्र आलिखितः।)

लक्ष्मणः - आर्ये ! पश्य पश्य।

सम्बन्धिनो वसिष्ठादीनेष तातस्तवार्चति।
गौतमश्च शतानन्दो जनकानां पुरोहितः ॥ १६ ॥

रामः - सुश्लिष्टमेतत्।

जनकानां रघूणां च सम्बन्धः कस्य न प्रियः।
यत्र दाता ग्रहीता च स्वयं कुशिकनन्दनः ॥ १७ ॥

सीता - एदे क्खु तक्कालकिदगोदाणमङ्गला चत्तारो भादरो विआहादिक्खिदा तुझे। अह्मो। जाणामि तस्सि जेव्व काले वत्तामि। (एते खलु तत्कालकृतगोदानमङ्गलाश्चत्वारो भ्रातरो विवाहदीक्षिता यूयम्। अहो! जानामि तस्मिन्नेव काले वर्ते।)

रामः - एवम्

समयः स वर्तत इवैष यत्र मां
समनन्दयत्सुमुखि! गौतमार्पितः।
अयमागृहीतकमनीयकङ्कण-
स्तव मूर्तिमानिव महोत्सवः करः ॥ १८ ॥

लक्ष्मणः - इयमार्या। इयमप्यार्या माण्डवी। इयमपि वधूः श्रुतकीर्तिः।

सीता - वच्छ, इयं वि अवरा का। ( वत्स इयमप्यपरा का। )

लक्ष्मणः - (सलज्जास्मितम्। अपवार्य) अये, ऊर्मिलां पृच्छत्यार्या। भवतु। अन्यतः सञ्चारयामि। (प्रकाशम्)। आर्ये! दृश्यतां द्रष्टव्यमेतत्। अयं च भगवान्भार्गवः।

सीता - (ससंभ्रमम्) कम्पितास्मि। (कम्पिदह्मि)

रामः - ऋषे ! नमस्ते।

लक्ष्मणः - आर्ये! पश्य। अयमार्येण---(इत्यर्धोक्ते।)

रामः - (साक्षेपम्) अयि ! बहुतरं द्रष्टव्यम्। अन्यतो दर्शय।

सीता - (सस्नेहबहुमानं निर्वर्ण्य।) सुट्ठु सोहसि अज्जउत्त एदिणा विणअमाहप्पेण। (सुष्ठु शोभसे आर्यपुत्र ! एतेन विनयमाहात्म्येन।)

लक्ष्मणः- एते वयमयोध्यां प्राप्ताः।

रामः - (साश्रुम्) स्मरामि।

जीवत्सु तातपादेषु नूतने दारसंग्रहे।
मातृभिश्चिन्त्यमानानां ते हि नो दिवसा गताः ॥ १९ ॥

इयमपि तदा जानकी -

प्रतनुविरलैः प्रान्तोन्मीलन्मनोहरकुन्तलै-
र्दशनकुसुमैर्मुग्धालोकं शिशुर्दधती मुखम्।
ललितललितैर्ज्योत्स्नाप्रायैरकृत्रिमविभ्रमै-
रकृत मधुरैरम्बानां मे कुतूहलमङ्गकैः।।२०।।

लक्ष्मणः - एषा मन्थरा।

रामः - (सत्वरमन्यतो दर्शयन्) देवि वैदेहि।

इङ्गुदीपादपः सोऽयं शृङ्गवेरपुरे पुरा।
निषादपतिना यत्र स्निग्धेनासीत् समागमः।।२१।।

लक्ष्मणः - (विहस्य, स्वगतम्) अये मध्यमाम्बावृत्तमन्तरितमार्येण।

## १४.२) साम्प्रतं मूलपाठम् अवगच्छाम - १६

सीता - होदु अज्जौत्त होदु। एहि। पेक्खह्म दाव दे चरिदम्। (भवत्वार्यपुत्र भवतु। एहि। प्रेक्षामहे तावत्ते चरितम्।)

(इत्युत्थाय परिक्रामति)

लक्ष्मणः - इदं तदालेख्यम्।

सीता - (निर्वर्ण्य) के एदे उवरिणिरन्तरदा उवत्थुवन्दि विअ अज्जउत्तम् (क एते उपरि निरन्तरस्थिता उपस्तुवन्तीवार्यपुत्रम्।)

लक्ष्मणः - देवि ! एतानि तानि सरहस्यानि जृम्भकास्त्राणि यानि भगवतः कृशाश्वात्कौशिकमृषिमुपसंक्रान्तानि। तेन ताटकावधे प्रसादीकृतान्यार्यस्य।

रामः - वन्दस्व देवि, दिव्यास्त्राणि।

ब्रह्मादयो ब्रह्महिताय तप्त्वा
परःसहस्रं शरदां तपांसि।
एतान्यपश्यन्गुरवः पुराणाः
स्वान्येव तेजांसि तपोमयानि॥१५॥

सीता- णमो एदारणम्। (नम एतेभ्यः)

रामः- सर्वथेदानीं त्वत्प्रसूतिमुपस्थास्यन्ति।

सीता- अणुगहीदह्मि। (अनुगृहीतास्मि।)

**अन्वयः -**

**सीता** - आर्यपुत्र भवतु भवतु। एहि। ते तावत् चरितं प्रेक्षामहे।

(इति उत्थाय परिक्रामति)

**लक्ष्मणः** - इदं तद् आलेख्यम्।

**सीता** - (निर्वर्ण्य) के एते उपरि निरन्तरस्थिता आर्यपुत्रम् उपस्तुवन्ति इव।

**लक्ष्मणः** - देवि ! एतानि तानि सरहस्यानि जृम्भकास्त्राणि यानि भगवतः कृशाश्वात् कौशिकम् ऋषिम् उपसङ्क्रान्तानि। तेन ताटकावधे आर्यस्य प्रसादीकृतानि।

**रामः** - देवि, दिव्यास्त्राणि वन्दस्व।

ब्रह्मादयः पुराणाः गुरवः ब्रह्महिताय शरदां परःसहस्रं तपांसि तप्त्वा एतानि स्वानि तपोमयानि तेजांसि एव अपश्यन्॥१५॥

**सीता** - एतेभ्यः नमः।

**रामः** - सर्वथा इदानीं त्वत्प्रसूतिम् उपस्थास्यन्ति।

**सीता** - अनुगृहीता अस्मि।

**अन्वयार्थः -**

**सीता** - आर्यपुत्र भवतु भवतु अस्तु अस्तु मम विषये प्रवादस्य चिन्ता न कर्तव्या। एहि आगच्छ। ते तव तावत् अपि चरितं चरित्रं प्रेक्षामहे पश्यामः। (इति उत्थाय परिक्रामति)

**लक्ष्मणः** - इदं तद् आलेख्यं चित्रम्।

**सीता** - (निर्वर्ण्य अवलोक्य) के एते इमे उपरि ऊर्ध्वं निरन्तरस्थिता अविरलं विहितावस्थानाः आर्यपुत्रम् उपस्तुवन्ति पूजयन्ति इव।

**लक्ष्मणः** - देवि मातः सीते! एतानि तानि सरहस्यानि गुह्यानि जृम्भकास्त्राणि विशेषशक्तिसम्पन्नानि दिव्यास्त्राणि यानि भगवतः देवात् कृशाश्वात् तन्नामकाद् ऋषेः कौशिकम् ऋषिम् कुशकर्षेः पुत्रं विश्वामित्रमहर्षिम् उपसङ्क्रान्तानि उपगतानि। तेन ताटकावधे ताटकासुरवधकाले आर्यस्य अनुकम्पया अग्रजाय रामचन्द्राय प्रसादीकृतानि आशीर्वादरूपेण अर्पितानि।

**रामः** - देवि प्रिये, दिव्यास्त्राणि जृम्भिकास्त्राणि वन्दस्व अभिवादयस्व।

ब्रह्मादयः ब्रह्मा आदिः येषां ते प्रजापतिप्रभृतयः पुराणाः प्राचीनाः गुरवः आचार्याः ब्रह्महिताय वेदस्य रक्षणाय शरदां वर्षाणां परःसहस्रं सहस्राधिकं तपांसि तपस्याः तप्त्वा विधाय एतानि इमानि स्वानि निजानि आत्मीयानि तपोमयानि तपस्याया उद्भूतानि तेजांसि तेजोरूपाणि एव अपश्यन् दृष्टवन्तः॥१५॥

**सीता** - एतेभ्यः नमः नमस्कारं विज्ञापयामि।

**रामः** - सर्वथा सर्वप्रकारेण इदानीम् अधुना त्वत्प्रसूतिम् तव सन्तानम् उपस्थास्यन्ति प्राप्स्यन्ति।

**सीता** - अनुगृहीता अनुग्रहं सम्प्राप्ता अस्मि भवामि।

### व्याख्यानम् -

रामस्य प्रशंसावचनं श्रुत्वा आनन्दिता सीता रामेण सह चित्रं द्रष्टुमारभते। एकस्मिन् चित्रे उपरिभागे केचन निरन्तरस्थिताः भगवन्तं रामं स्तुवन्ति इति दृश्यते। ततः सा यदा अस्मिन् विषये लक्ष्मणं पृच्छति तदा लक्ष्मणः उत्तरं प्रयच्छति यद् एतानि हि मन्त्रयुक्तानि जृम्भकनामानि अस्त्राणि। भगवता कृशाश्वेन ऋषये कौशिकाय एतानि दिव्यास्त्राणि प्रदत्तानि। ताटकाराक्षसीवधावसरे भगवते रामचन्द्राय प्रसन्नो भूत्वा विश्वामित्रः इमानि अस्त्राणि रामाय अनुग्रहपूर्वकं दत्तवान्।

लक्ष्मणोक्तेः अनन्तरं सीतां प्रति तेषां दिव्यानाम् अस्त्राणां वन्दनाय उक्तवान्। भगवान् श्रीरामः दिव्यास्त्राणां स्वरूपं वर्णयति यत् पुरा दानवादयः बहवः अखिलधर्ममूलभूतं वेदं विनाशयितुम् उद्युक्ताः। अतः तान् निवारयितुं जगत्स्रष्टृप्रजापतिप्रभृतयः प्राचीनाः आचार्याः कठोरां तपस्याम् कर्तुम् आरब्धवन्तः। सरस्राधिकवत्सरान् व्याप्य तपांसि आचरितवन्तः। ततः परं ते स्वकीयानि तेजांसि इव समुत्पन्नानि दिव्यास्त्राणि अवलोकितवन्तः।

रामवचनात् तेषां जृम्भकास्त्राणां दिव्यत्वं ज्ञात्वा देवी सीता तानि दिव्यास्त्राणि प्रणमन्ति। रामः सीतां कथयति यत् यथा स एतानि प्राप्तवान् तथैव तयोः सन्ततिः अपि एतानि दिव्यास्त्राणि प्राप्स्यति। सीता रामं वदति यत् - सा तस्य वचनेन अनुगृहीता अस्ति इति।

### व्याकरणविमर्शः -

१. निर्वर्ण्य – निर्–पूर्वकात् वर्ण–धातोः ल्यपि निर्वर्ण्य इति रूपम्।

२. उपस्तुवन्ति - उपपूर्वकात् स्तुधातोः लटि प्रथमपुरुषचबहुवचने उपस्तुवन्ति इति रूपम्।



३. प्रसादीकृतानि - अप्रसादानि प्रसादानि कृतानि इत्यर्थे च्विप्रत्यये कृधातोः अनुप्रयोगे क्तप्रत्यये नपुंसके प्रथमाबहुवचने प्रसादीकृतानि इति रूपम्।

४. दिव्यास्त्राणि – दिव्यानि च तानि अस्त्राणि दिव्यास्त्राणि इति कर्मधारयसमासः।

५. उपसङ्क्रान्तानि - उपपूर्वकात् सम्पूर्वकात् क्रम्धातोः क्तप्रत्यये नपुंसके प्रथमाबहुवचने उपसङ्क्रान्तानि इति रूपम्।

६. ब्रह्मादयः - ब्रह्म आदिर्येषां ते ब्रह्मादयः इति बहुव्रीहिसमासः।

७. तप्त्वा - सन्तापार्थकात् तप्-धातोः क्त्वाप्रत्यये तप्त्वा इति रूपम्।

**छन्दः** - ब्रह्मादयः इत्यस्मिन् श्लोके इन्द्रवज्रोपेन्द्रवज्रयोः समावेशाद् उपजातिच्छन्दः। तल्लक्षणं छन्दोमञ्जर्याम्-

"अनन्तरोदीरितलक्ष्मभाजौ
पादौ यदीयावुपजातयस्ते।।" इति।

**अलङ्कारविमर्शः -**

१. ब्रह्मादय इति श्लोके शस्त्रदर्शनेन महापुरुषाणामपि कीर्तनाद् उदात्तालङ्कारः। तल्लक्षणम् -

"लोकातिशयसम्पत्तिवर्णनोदात्तमुच्यते।
यद्वापि प्रस्तुतस्याङ्गं महतां चरितं भवेत्।।" इति।

२. अस्मिन् श्लोके अद्भुतानां शस्त्राणां वर्णनेन भाविकालङ्कारः। तल्लक्षणं दर्पणे -

"अद्भुतस्य पदार्थस्य भूतस्याथ भविष्यतः।
यत्प्रत्यक्षायमाणत्वं तद्भाविकमुदाहृतम्।।" इति।

३. स्वान्येव तेजांसीत्यत्र रूपकालङ्कारः।

४. अलङ्कारत्रयस्य अङ्गाङ्गिभावात् सङ्करालङ्कारः।

## पाठगतप्रश्नाः - १

१. दिव्यास्त्राणि कस्माद् विश्वामित्रेण सम्प्राप्तानि।

२. रामचन्द्रेण कदा कस्माद् दिव्यास्त्राणि आप्तानि।

३. ब्रह्मादयः किमर्थं तपः कृतवन्तः।

४. ब्रह्मादयः कियन्तं कालं तपः कृतवन्तः।

५. ते कीदृशानि दिव्यास्त्राणि अपश्यन्।

६. उपजातिच्छन्दसः किं लक्षणम्।

७. प्रसादीकृतानि इति रूपं साधयत।

## १४.३) साम्प्रतं मूलपाठम् अवगच्छाम - १७

**लक्ष्मणः -** **एष मिथिलावृत्तान्तः।**

**सीता -** **अम्महे, दलन्तणवणीलुप्पलसिणिद्धमसिणसोहमाणमंसलेन देहसोहग्गेण विह्मअत्थिमिदतादद्दीसन्तसोम्मसुन्दरसिरौ अणादरखंडिदसङ्करसरासणो सिहण्डमुद्धमुहमुण्डलो अज्जउत्तो आलिहिदो। (अहो, दलन्नवनीलोत्पलश्यामलस्निग्धमसृणशोभमानमांसलेन देहसौभाग्येन विस्मयस्तिमिततातदृश्यमानसौम्यसुन्दरश्रीरनादरत्रुटितशंकरशरासनः शिखण्ड -मुग्धमुखमण्डल आर्यपुत्र आलिखितः।)**

**लक्ष्मणः -** **आर्ये ! पश्य पश्य।**

**सम्बन्धिनो वसिष्ठादीनेष तातस्तवार्चति।**
**गौतमश्च शतानन्दो जनकानां पुरोहितः ॥ १६ ॥**

**रामः -** **सुश्लिष्टमेतत्।**

**जनकानां रघूणां च सम्बन्धः कस्य न प्रियः।**
**यत्र दाता ग्रहीता च स्वयं कुशिकनन्दनः ॥ १७ ॥**

### अन्वयः -

**लक्ष्मणः** - एष मिथिलावृत्तान्तः।

**सीता** - अहो, दलन्नवनीलोत्पलश्यामलस्निग्धमसृणशोभमानमांसलेन देहसौभाग्येन विस्मयस्तिमिततातदृश्यमानसौम्यसुन्दरश्रीः अनादरत्रुटितशङ्करशरासनः शिखण्डमुग्धमुखमण्डलः आर्यपुत्रः आलिखितः।

**लक्ष्मणः** - आर्ये ! पश्य पश्य।

एष तव तातः सम्बन्धिनः वसिष्ठादीन् अर्चति (तथा)। जनकानां पुरोहितः गौतमः शतानन्दः (सम्बन्धिनः वसिष्ठादीन् अर्चति)॥१६॥

**रामः** - सुश्लिष्टम् एतत्।

जनकानां रघूणां च सम्बन्धः कस्य न प्रियः। यत्र स्वयं कुशिकनन्दनः दाता ग्रहीता च॥१७॥

### अन्वयार्थः -

**लक्ष्मणः** - एषः अयं मिथिलावृत्तान्तः मिथिलानगरोदन्तः।

**सीता** - अहो आश्चर्येण दलन्नवनीलोत्पलश्यामलस्निग्धमसृण-शोभमानमांसलेन दलत् विकसत् यत् नवं नूतनं नीलोत्पलं नीलकमलं तद् इव श्यामलं श्यामं स्निग्धं चिक्कणं मसृणं कोमलं शोभमानं सुन्दरं मांसलं बलवत् तेन देहसौभाग्येन शरीरसौन्दर्येण विस्मयस्तिमिततातदृश्यमानसौम्यसुन्दरश्रीः विस्मयेन आश्चर्येण स्तिमितः निश्चलः यः तातः पिता तेन दृश्यमाना अवलोक्यमाना सौम्या आह्लादकरी



सुन्दरी मनोहारिणी श्रीः शोभा यस्य तथोक्तः अनादरत्रुटितशङ्करशरासनः अनादरेण अवहेलया त्रुटितं भग्नं शङ्करस्य शिवस्य शरासनं धनुः येन तथोक्तः शिखण्डमुग्धमुखमण्डलः शिखण्डेन काकपक्षेण मुग्धं सुन्दरं मुखमण्डलं वदनमण्डलं यस्य स आर्यपुत्रः रामः आलिखितः चित्रितः।

**लक्ष्मणः** - आर्ये ! पश्य पश्य अवलोकय अवलोकय। एषः अयं तव भवत्याः सीतायाः तातः पिता जनकः जनकानां पुरोहितः जनकराजस्य पुरोधाः गौतमः शतानन्दः तन्नामकमुनिः सम्बन्धिनः वसिष्ठादीन् वरपक्षीयान् अर्चति सत्करोति॥१६॥

**रामः** - सुश्लिष्टं सुसम्बद्धम् एतत्।

जनकानां जनकवंशोद्भवानां रघूणां रघुवंशोद्भवानां नृपाणां च सम्बन्धः अपत्यसम्बन्धः कस्य पुरुषस्य न प्रियः अभिप्रेतः, अपि तु सर्वस्यापि अभिप्रेत इति भावः। यत्र यस्मिन् वैवाहिके सम्बन्धे स्वयं कुशिकनन्दनः विश्वामित्रः दाता दानकर्ता ग्रहीता च प्रतिग्रहीता च वर्तते।॥१७॥

## व्याख्यानम् -

तदनन्तरं लक्ष्मणः तस्मिन् चित्रे मिथिलावृत्तान्तं दर्शयितुम् आरभते। तस्मिन् चित्रे अङ्कितं रामस्य सौन्दर्यम् अवलोक्य सीता प्रसन्ना सती- प्रस्फुटितनीलपद्मं यथा श्यामलं स्निग्धं मसृणं च भवति तादृशं शरीरं वर्तते श्रीरामचन्द्रस्य। तत्सौन्दर्यदर्शने निश्चलः पितृदेवः सविस्मयं तस्य कान्तिम् अवलोकते। श्रीरामः अनायासेन एव हरधनुः खण्डितवान्। शिखण्डेन तादृशस्य श्रीरामस्य मुखम् अत्यधिकं सुन्दरं दृश्यते।

ततश्च लक्ष्मणः सीतारामयोः विवाहकालीनं चित्रं दर्शयति। विवाहात् प्राग् वरपक्षिणः वसिष्ठादयः मिथिलानगरे नृपस्य जनकस्य गृहम् आगताः। तस्मिन् चित्रे सीतायाः पिता महाराजः जनकः तेषां वंशस्य कुलपुरोहितः गौतमः शतानन्दः वसिष्ठादीनां सत्कारं कुर्वन्ति। अनेन विवाहकालीनं घटनाचक्रं द्वयोः अपि स्मृतिपथि आगतम्।

अत्र सीतारामयोः विवाहस्य माहात्म्यं वर्णयति स्वयं श्रीरामः। अस्मिन् विवाहे कन्यारूपेण जनकवंशजा सीता वर्तते। वररूपेण च तिष्ठति रघुवंशीयः पुरुषोत्तमः श्रीरामः। उभयोः एव वंशौ पूज्यौ वर्तते। तयोः परिणयेन च एवंविधयोः द्वयोः वंशयोः मध्ये सम्बन्धः सम्भवति। किञ्च एतस्य विवाहस्य अपरमपि माहात्म्यं वर्तते। अत्र कन्यादानकर्ता कन्याग्रहणकर्ता च एकः एव वर्तते। स च कुशिकमुनिपुत्रः स्वयं कौशिकः। एवं विवाहस्य माहात्म्यं वर्णयन् श्रीरामः ताभ्यां जातः पुत्रः अपि सर्वगुणसम्पन्नः भविष्यति इति प्रकटयति।

## व्याकरणविमर्शः -

१. मांसलम् - मांसम् अस्यास्तीति विग्रहे मांसशब्दात् लच्प्रत्यये मांसलशब्दो निष्पन्नः।

२. देहसौभाग्येन – सुभगस्य भावः इति विग्रहे सुभगशब्दात् ष्यञ्प्रत्यये सौभाग्यम् इति निष्पद्यते। देहस्य सौभाग्यम् देहसौभाग्यमिति षष्ठीतत्पुरुषसमासः, तेन।

३. अनादरखण्डितशङ्करशरासनः - अनादरेण खण्डितम् अनादरखण्डितमिति तृतीयातत्पुरुषसमासः। शङ्करस्य शरासनं शङ्करशरासनमिति षष्ठीतत्पुरुषसमासः। अनादरखण्डितं शङ्करशरासनं येन सः अनादरखण्डितशङ्करशरासनः इति बहुव्रीहिसमासः।

४. शिखण्डमुग्धमुखमण्डलः - शिखण्डेन मुग्धं शिखण्डमुग्धमिति तृतीयातत्पुरुषसमासः। शिखण्डमुग्धं मुखमण्डलं यस्य स शिखण्डमुग्धमुखमण्डलः इति बहुव्रीहिसमासः।

५. वसिष्ठादीन् - वसिष्ठ आदिर्येषां ते वसिष्ठादयः इति, तान् इति तद्गुणसंविज्ञानबहुव्रीहिः

६. गौतमः - गोतमस्यापत्यं पुमान् इत्यर्थे गोतमशब्दाद् अण्प्रत्यये गौतमः इति निष्पन्नम्।

७. पुरोहितः - पुरो धीयते इत्यर्थे पुरस् इत्युपपदे धाधातोः क्तप्रत्यये पुरोहितशब्दो निष्पन्नः।

८. ग्रहीता - ग्रह्-धातोः कर्तरि तृच्प्रत्यये निष्पन्नाद् ग्रहीतृशब्दात् पुंसि प्रथमैकवचने सौ ग्रहीता इति रूपम्।

**छन्दः** - सम्बन्धिनः, जनकानाम् इति श्लोकद्वये अनुष्टुप् छन्दः।

**व्याकरणविमर्शः -**

१. जनकानामिति श्लोक कस्य न प्रियः इत्यनेन अपि तु सर्वस्य प्रियः इत्यर्थान्तरस्य आपाताद् अर्थापत्तिरलङ्कारः।

## पाठगतप्रश्नाः - २

८. आर्यपुत्रः कीदृश आलिखितः।

९. अनादरखण्डितशङ्करशरासनः इत्यत्र समासं लिखत।

१०. सीतायाः तातः कान् अर्चति।

११. जनकस्य पुरोहितः कः।

१२. जनकेन सह कः वसिष्ठादीन् अर्चति।

१३. कस्य कस्य च सम्बन्धः समेषां प्रियः।

१४. सम्बन्धे दाता ग्रहीता च कः।

## १४.४) साम्प्रतं मूलपाठम् अवगच्छाम - १८

**सीता -** **एदे क्खु तक्कालकिदगोदाणमङ्गला चत्तारो भादरो विआहादिक्खिदा तुझे। अह्मो। जाणामि तस्सि जेव्व काले वत्तामि। (एते खलु तत्कालकृतगोदानमङ्गलाश्चत्वारो भ्रातरो विवाहदीक्षिता यूयम्। अहो! जानामि तस्मिन्नेव प्रदेशे तस्मिन्नेव काले वर्ते।)**

**रामः -** **एवम्**

**समयः स वर्तत इवैष यत्र मां**
**समनन्दयत्सुमुखि! गौतमार्पितः।**
**अयमागृहीतकमनीयकङ्कण-**
**स्तव मूर्तिमानिव महोत्सवः करः ॥ १८ ॥**

**लक्ष्मणः -** **इयमार्या। इयमप्यार्या माण्डवी। इयमपि वधूः श्रुतकीर्तिः।**

**सीता -** **वच्छ, इयं वि अवरा का। ( वत्स इयमप्यपरा का। )**

**लक्ष्मणः -** **(सलज्जास्मितम्। अपवार्य) अये, ऊर्मिलां पृच्छत्यार्या। भवतु। अन्यतः सञ्चारयामि। (प्रकाशम्)। आर्ये! दृश्यतां द्रष्टव्यमेतत्। अयं च भगवान्भार्गवः।**

**सीता -** **(ससंभ्रमम्) कम्पितास्मि। (कम्पिदह्मि)**

**रामः -** **ऋषे ! नमस्ते।**

**लक्ष्मणः -** **आर्ये! पश्य। अयमार्येण---(इत्यर्धोक्ते।)**

**रामः -** **(साक्षेपम्) अयि ! बहुतरं द्रष्टव्यम्। अन्यतो दर्शय।**

**सीता -** **(सस्नेहबहुमानं निर्वर्ण्य।) सुट्ठु सोहसि अज्जउत्त एदिणा विणअमाहप्पेण। (सुष्ठु शोभसे आर्यपुत्र ! एतेन विनयमाहात्म्येन।)**

**अन्वयः -**

**सीता** - एते खलु तत्कालकृतगोदानमङ्गलाः यूयं चत्वारो भ्रातरो विवाहदीक्षिताः। अहो! जानामि तस्मिन् एव प्रदेशे तस्मिन् एव काले वर्ते।

**रामः** - एवम्,

हे सुमुखि, एष स समयः वर्तते इव, यत्र गौतमार्पितः आगृहीतकमनीयकङ्गणः अयं तव करः मूर्तिमान् महोत्सवः इव मां समनन्दयत्॥१८॥

**लक्ष्मणः** - इयम् आर्या। इयम् अपि आर्या माण्डवी। इयम् अपि वधूः श्रुतकीर्तिः।

**सीता** - वत्स, इयम् अपि अपरा का।

**लक्ष्मणः** - (सलज्जास्मितम्। अपवार्य) अये, आर्या ऊर्मिलां पृच्छति। भवतु। अन्यतः सञ्चारयामि। (प्रकाशम्)। आर्ये! दृश्यतां द्रष्टव्यम् एतत्। अयं च भगवान् भार्गवः।

**सीता** - (ससंभ्रमम्) कम्पिता अस्मि।

**रामः** - ऋषे ! नमस्ते।

**लक्ष्मणः** - आर्ये! पश्य। अयम् आर्येण---(इत्यर्धोक्ते।)

**रामः** - (साक्षेपम्) अयि ! बहुतरं द्रष्टव्यम्। अन्यतो दर्शय।

**सीता** - (सस्नेहबहुमानं निर्वर्ण्य।) आर्यपुत्र, एतेन विनयमाहात्म्येन सुष्ठु शोभसे।

**अन्वयार्थः -**

**सीता** - एते इमे खलु निश्चयेन तत्कालकृतगोदानमङ्गलाः तत्काले विवाहप्राक्काले कृतं सम्पादितं गोदानमङ्गलं केशदानरूपं मङ्गलकार्यं यैः ते यूयं चत्वारः भ्रातरः सहोदराः विवाहदीक्षिताः उद्वाहसंस्कृताः। अहो आश्चर्यम् जानामि चिन्तयामि यत् तस्मिन्नेव प्रदेशे स्थाने तस्मिन्नेव काले विवाहसमये वर्ते अस्मि।

**रामः** - एवं तथा,

हे सुमुखि शोभनवदने एषः अयं सः अनुभूतः समयः कालः वर्तते इव यत्र यस्मिन् काले गौतमार्पितः शतानन्दप्रदत्तः आगृहीतकमनीयकङ्कणः आगृहीतं धृतं कमनीयं सुन्दरं कङ्कणं करभूषणं येन सः परिहितमनोहरवलयः अयम् एष तव भवत्याः करः हस्तः मूर्तिमान् शरीरी महोत्सव इव मां रामं समनन्दत् आनन्दितमकरोत्॥१८॥

**लक्ष्मणः** - इयम् एषा आर्या भवती सीता। इयम् एषा अपि आर्या माण्डवी भरतपत्नी। इयम् अपि श्रुतकीर्तिः शत्रुघ्नपत्नी।

**सीता** - वत्स, इयम् अपि अपरा अन्या का।

**लक्ष्मणः** - (सलज्जास्मितं लज्जया स्मितेन च सहितम्, अपवार्य स्वगतम्) अये ऊर्मिलां मम पत्नीं पृच्छति जिज्ञासते आर्या सीता। भवतु अस्तु। अन्यतः अन्यत् किमपि चित्रं सञ्चारयामि पश्यामि। (प्रकाशम्) आर्ये भद्रे दृश्यताम् अवलोक्यतां द्रष्टव्यम् अवलोकनीयम् एतत् इदम्। अयम् एष च भगवान् भार्गवः भृगुपुत्रः परशुरामः।

**सीता** - (ससम्भ्रमम् सभयम्) कम्पिता अस्मि कम्पमाना भवामि।

**रामः** - ऋषे मुने नमः नमस्काराः ते तुभ्यम्।

**लक्ष्मणः** - आर्ये सीते! पश्य। अयं परशुरामः आर्येण रामचन्द्रेण ---(इत्यर्धोक्ते इति वाक्यसमापनात्पूर्वमेव)

**रामः** - (साक्षेपम् आक्षेपसहितम्) अयि! बहुतरं द्रष्टव्यम् बहु किमपि द्रष्टव्यम्। अन्यतो दर्शय अन्यत्र चित्रितं दर्शय।

**सीता** - (सस्नेहबहुमानं स्नेहेन बहुमानेन च सहितं निर्वर्ण्य अवलोक्य।) आर्यपुत्र! एतेन अनेन विनयमाहात्म्येन स्वोत्कर्षताकथनरूपेण विनयमाहात्म्येन सुष्ठु सुन्दरं शोभसे।

**व्याख्यानम् -**

ततः सीता विवाहसंस्कारेण संस्कृतान् केशदानं कुर्वतः चतुरः सहोदरान् रामलक्ष्मणभरतशत्रुघ्नान् पश्यति। सीता अन्वभूत् यत् सा तस्मिन् एव विवाहकाले इदानीम् अस्ति। अनेन चित्रकारस्य निपुणता ज्ञातुं शक्यते।

तदनु रामः वदति - अस्मिन् चित्रे तयोः विवाहकालीना सा स्थितिः चित्रिता यत्र सीतायाः हस्तः श्रीरामस्य हस्तस्य उपरि स्थापितः। तत् श्रीरामः एवं वर्णयति यत् सीताया हस्तः

सुन्दरकङ्कणभूषितः आसीत्। यदा पुरोहितः शतानन्दः सीतायाः हस्तं रामस्य हस्तस्य उपरि अस्थापयत् तदा सीतायाः कोमलः हस्तः श्रीरामम् अतीव अनन्दयत्। रामः सीताहस्तं महोत्सवरूपेण वर्णयति। यथा महोत्सवकाले महान् आनन्दः जायते तथा सीताहस्तसंस्पर्शेन अपि रामहृदये आनन्दतरङ्गः उत्थितः।

ततः लक्ष्मणः क्रमशः रामपत्नीं भरतपत्नीं माण्डवीं शत्रुघ्नपत्नीं श्रुतकीर्तिं स्वपत्नीम् ऊर्मिलां च दृष्टवान् सीतां च दर्शयति। तदनन्तरं लक्ष्मणः अन्यद् एकं चित्रम् अपश्यत् यत्र भगवान् श्रीपरशुरामः चित्रितः। तत् दृष्ट्वा देवी सीता कम्पिता । ततः श्रीरामः परशुरामं प्रणमति।

तदा लक्ष्मणः रामेण परशुरामः पराजितः इति वक्तुं यावत् प्रवर्तते तावत् श्रीरामः तं तस्माद्वर्णनात् निवार्य अपरं चित्रं प्रदर्शयितुं कथयति। तदा रामस्य विनयम् अवलोक्य सीता रामस्य विनयाधिक्येन प्रकाशितं सौन्दर्यं वर्णयति।

**व्याकरणविमर्शः -**

१. समनन्दयत्- समुपसर्गपुर्वकात् नन्दधातोः णिचि लङि प्रथमपुरुषैकवचने समनन्दयत् इति रूपम्।

२. सुमुखि- शोभनं मुखं यस्याः सा सुमुखी सम्बोधनैकवचने सुमुखि इति रूपम्।

३. आगृहीतकमनायकङ्णः– आपूर्वकात् ग्रह्–धातोः क्तप्रत्यये आगृहीत इति रूपम्। आगृहीतं कमनीयं कङ्कणं येन सः आगृहीतकमनीयकङ्कणः।

४. महोत्सवः - महान् च असौ उत्सवः महोत्सवः इति कर्मधारयसमासः।

५. विनयमाहात्म्येन – विनयस्य माहात्म्यं विनयमाहात्म्यम्, तेनेति षष्ठीतत्पुरुषसमासः।

**छन्दः -**

१. समयः स इत्यस्मिन् श्लोके मञ्जुभाषिणीच्छन्दः। तल्लक्षणं छन्दोमञ्जर्यां - "सहसा जगौ भवति मञ्जुभाषिणी" इति।

## अलङ्कारविमर्शः -

१. समयः स इत्यस्मिन् श्लोके वर्तते इव इति क्रियोत्प्रेक्षा, मूर्तिमान् महोत्सव इव इति गुणोत्प्रेक्षा, भूतस्य वृत्तान्तस्य प्रस्तावाच्च भाविकालङ्कारः।

## पाठगतप्रश्नाः - ३

१५. रामादयः भ्रातरः चित्रे कीदृशाः।

१६. तस्मिन्नेव काले इत्यनेन कः कालः अभिप्रेतः।

१७. सीतायाः करः केन रामस्य हस्ते अर्पितः।

१८. सीतायाः करः कीदृशः।

१९. सीतायाः हस्तः रामं किम् इव आनन्दितम् अकरोत्।

२०. मञ्जुभाषिणीवृत्तस्य लक्षणं लिखत।

२१. रामः केन माहात्म्येन शोभते।

## १४.५) साम्प्रतं मूलपाठम् अवगच्छाम - १९

**लक्षणः-** **एते वयमयोध्यां प्राप्ताः।**

**रामः -** **(सास्रम्) स्मरामि, हन्त स्मरामि।**

**जीवत्सु तातपादेषु नूतने दारसंग्रहे।**
**मातृभिश्चिन्त्यमानानां ते हि नो दिवसा गताः ॥ १९ ॥**

**इयमपि तदा जानकी -**

**प्रतनुविरलैः प्रान्तोन्मीलन्मनोहरकुन्तलै-**
**र्दशनकुसुमैर्मुग्धालोकं शिशुर्दधती मुखम्।**
**ललिततलितैर्ज्योत्स्नाप्रायैरकृत्रिमविभ्रमै-**
**रकृत मधुरैरम्बानां मे कुतूहलमङ्गकैः।।२०।।**

**लक्षणः -** **एषा मन्थरा।**

**रामः -** **(सत्वरमन्यतो दर्शयन्) देवि वैदेहि।**

**इङ्गुदीपादपः सोऽयं शृङ्गवेरपुरे पुरा।**
**निषादपतिना यत्र स्निग्धेनासीत् समागमः।।२१।।**

**लक्षणः -** **(विहस्य, स्वगतम्) अये मध्यमाम्बावृत्तमन्तरितमार्येण।**

**अन्वयः -**

**लक्ष्मणः**- एते वयम् अयोध्यां प्राप्ताः।

**रामः** - (सास्रम्) स्मरामि, हन्त स्मरामि।

तातपादेषु जीवत्सु दारसंग्रहे नूतने मातृभिः चिन्त्यमानानां नः ते हि दिवसा गताः॥१९॥

इयमपि तदा जानकी -

प्रतनुविरलैः प्रान्तोन्मीलन्मनोहरकुन्तलैः दशनकुसुमैः मुग्धालोकं मुखं दधती शिशुः ललितललितैः ज्योत्स्नाप्रायैः अकृत्रिमविभ्रमैः मधुरैः अङ्गकैः मे अम्बानां च कुतूहलम् अकृत।।२०।।

**लक्ष्मणः** - एषा मन्थरा।

**रामः** - (सत्वरमन्यतो दर्शयन्) देवि वैदेहि।

शृङ्गवेरपुरे अयं स इङ्गुदीपादपः. यत्र पुरा स्निग्धेन निषादपतिना समागमः आसीत्।।२१।।

**लक्ष्मणः** - (विहस्य, स्वगतम्) अये आर्येण मध्यमाम्बावृत्तम् अन्तरितम्।



**अन्वयार्थः -**

**लक्ष्मणः**- एते वयम् अयोध्यां प्राप्ताः वयम् अयोध्यां प्राप्तवन्तः तथा आलिखिताः।

**रामः** - (सास्रम् अश्रुपातपूर्वकम्) स्मरामि, हन्त स्मरामि।

तातपादेषु पितृचरणेषु जीवत्सु प्राणं दधत्सु दारसंग्रहे विवाहे नूतने नवे मातृभिः जननीभिः चिन्त्यमानानां लाल्यमानानां नः अस्माकं ते पूर्वानुभूताः हि निश्चयेन दिवसाः गताः दिवसाः व्यतीताः॥ १९॥

इयम् एषा अपि तदा विवाहात् परं जानकी देवी सीता -

प्रतनुविरलैः प्रतनूनि च तानि विरलानि तैः अतिसूक्ष्मानिविडैः प्रान्तोन्मीलन्मनोहरकुन्तलैः प्रान्तोन्मिलन्तः कपोलप्रान्ते स्फुरन्तः तैः मनोहरैः कुन्तलैः सुन्दरैः केशैः, दशनकुसुमैः कुसुमतुल्यदन्तैः मुग्धालोकं दर्शनीयं मुखम् आननं दधती धारयन्ती शिशुः बालिका इयं जानकी अपि एषा सीता अपि ललितललितैः मनोहरादपि मनोहरैः ज्योत्स्नाप्रायैः कौमुदीतुल्यैः अकृत्रिमविभ्रमैः स्वाभाविकविलासैः मधुरैः प्रियैः अङ्गकैः अवयवैः मे मम अम्बानां जननीनां कौशल्यादीनां कुतूहलं कौतुकम् अकृत अकरोत्॥ २०॥

**लक्ष्मणः** - एषा मन्थरा अर्थाद् अयं मन्थरवृत्तान्तः आलिखितः।

**रामः** - (सत्वरम् शीघ्रम् अन्यतो मन्थरावृत्तान्तसूचकस्थलाद् अन्यत्र दर्शयन् अवलोकयन्) देवि प्रिये वैदेहि सीते।

शृङ्गवेरपुरे शृङ्गवेरपुराख्ये स्थाने अयम् एष स पूर्वदृष्टः इङ्गुदीपादपः तापसतरुः यत्र वनगमनकाले पुरा पूर्वं स्निग्धेन स्नेहयुक्तेन परमभक्तेन निषादपतिना निषादाधिपेन गुहेन समागमः साक्षात्कारः आसीत् प्रवृत्तः।।२१।।

**लक्ष्मणः** - (विहस्य सस्मितम्, स्वगतम् आत्मगतम्) अये अहो आर्येण श्रीरामेण मध्यमाम्बावृत्तम् कैकेय्याः चरितम् अन्तरितम् निह्नुतम्।

**व्याख्यानम् -**

ततः परस्मिन् चित्रे विवाहात् परं तेषाम् अयोध्यानगरप्राप्तिः अङ्किता। रामः सक्रन्दनं कथयति यत् स सर्वमेतत् वृत्तान्तं स्मरति इति।

अत्र श्रीरामः विवाहात् परं तेषां जीवनं कथम् अतिवाहितम् इति वर्णयति। स वदति यत् तस्मिन् काले तस्य पितृचरणाः जीविताः आसन्। अतः राज्यादिविषये सर्वं चिन्तनादिकं स करोति स्म। अपि च तेषां मातरः तेषां सुखदुःखादिविषये सततं चिन्तयन्त्यः आसन्। मातृषु पितृषु च सत्सु ते सर्वथा एव चिन्तामुक्ताः आसन्। एवं तस्मिन् काले तेषां दिनानि सुखेन गच्छन्ति स्म। अत्र तानि सुखमयानि दिनानि चित्रम् अवलोक्य स्मृतिपथमायान्ति श्रीरामचन्द्रस्य।

ततः श्रीरामः चित्रे चित्रितायाः विवाहोत्तरवर्तिकालीनायाः सीतायाः शरीरसौन्दर्यं वर्णयति। सीतायाः मुखम् अतीव निपुणतया भगवता निर्मितम्। अतः तद् विरलम् आसीत्। तस्याः सुन्दरकेशाः मुखस्य उपरि स्फुरन्ति स्म। तस्याः श्वेताः दन्ताः पुष्पाणि इव कोमलानि आसन्। एवं मोहकरं

मुखमण्डलं धारयन्त्याः सीतायाः अङ्गानि अतिकोमलानि आसन्। यथा ज्योत्स्ना जनानां मनसि प्रमोदम् उत्पादयति तथा स्वाभाविकतया विलासयुक्तानि सीतायाः अङ्गानि अपि रामस्य तथा तस्य जननीनां कौशल्याकैकेयीसुमित्राणां मनःसु कुतूहलम् असृजत्। अतः ताः पुनः पुनः जानकीम् अवलोकितुम् समुत्सुकाः आसन्।

ततः मन्थरावृत्तान्तं यदा लक्ष्मणः दर्शयति तदा रामः कैकेय्या मातुः अपवादविषयकम् आलोचनम् अनिच्छन् चित्रान्तरं पश्यति। यत् दृष्ट्वा स सीतां प्रति कथयति यत् अयमेव स तापसतरुः यत्र निषादराजेन गुहेन सह तस्य साक्षात्कारो जातः।

**व्याकरणविमर्शः -**

१. जीवत्सु- जीव्-धातोः शतृप्रत्यये सप्तमीबहुवचने जीवत्सु इति रूपम्।

२. चिन्त्यमानानाम्- चिन्त्-धातोः कर्मणी शानचि षष्ठीबहुवचने चिन्त्यमानानाम् इति रूपम्।

३. प्रान्तोन्मीलन्मनोहरकुन्तलैः- प्रान्तयोः उन्मीलन्तः प्रान्तोन्मीलन्तः इति सप्तमीतत्पुरुषः। मनोहराः कुन्तलाः मनोहरकुन्तलाः इति कर्मधारयसमासः। प्रान्तोन्मीलन्तः मनोहरकुन्तलाः प्रान्तोन्मीलन्मनोहरकुन्तलाः, तैः इति कर्मधारयसमासः।

४. दशनकुसुमैः– दशनाः कुसुमानीव तैः दशनकुसुमैः इति कर्मधारयसमासः।

५. मुग्धालोकम्- मुग्धः आलोकः यस्य तत् मुग्धालोकम् इति बहुव्रीहिसमासः।

६. अकृत्रिमविभ्रमैः- अकृत्रिमाः विलासाः येषां तैः अकृत्रिमविभ्रमैः इति बहुव्रीहिसमासः।

छन्दः-

१. जीवत्सु इति श्लोके अनुष्टुप् छन्दः।

२. प्रतनुविरलैः इति श्लोके हरिणीछन्दः। तल्लक्षणं तावत्- "नसमरसला गः खड्वैदैर्हयैर्हरिणी मता" इति।

## अलङ्कारविमर्शः -

१. जीवत्सु इति श्लोके दिवसानां सुखप्रदत्वे सत्यपि, तातपादानां जीवितत्वे पुनः नवविवाहरूपस्य हेत्वन्तरस्य खले कपोतिकान्यायात् साहित्येन एकत्रावतारणात् समुच्चयालङ्कारः।

२. प्रतनुविरलैः इत्यत्र मुग्धनायिकावत् असाधारणचेष्टादीनां वर्णनात् स्वभावोक्त्यलङ्कारः। तल्लक्षणं दर्पणे -

"स्वभावोक्तिर्दुरूहार्थस्वक्रियारूपवर्णनम्।" इति।

३. ज्योत्स्नाप्रायैः इत्यत्र लुप्तोपमालङ्कारः।

४. स्वभावोक्तेः उपमाया अङ्गाङ्गिभावात् सङ्करालङ्कारः।

## पाठगतप्रश्नाः - ४

२२. श्रीरामस्य विवाहात्परं राज्यादिविषये कः चिन्तनं करोति स्म।

२३. कीदृशा दिवसाः रामादीनां गताः।

२४. सीतायाः केशाः कीदृशाः।

२५. सीतायाः दन्ताः कीदृशाः।

२६. सीतायाः मुखं कीदृशम्।

२७. सीताया अवयवाः कीदृशाः।

२८. कुत्र निषादराजेन सह रामस्य साक्षात्कारः सम्पन्नः।

## पाठसारः

रामस्य प्रशंसावचनं श्रुत्वा आनन्दिता सीता रामेण सह चित्रं द्रष्टुमारभते।प्रथमतः ते तत् चित्रं पश्यन्ति यत्र ताटकावधकाले सन्तुष्टः ऋषिः वैश्वामित्रः कृशाश्वात् समालब्धानि दिव्यास्त्राणि अनुकम्पया रामाय प्रायच्छत्। रामवचनात् तेषां जृम्भकास्त्राणां दिव्यत्वं ज्ञात्वा देवी सीता तानि दिव्यास्त्राणि प्रणमन्ति। रामः सीतां कथयति यत् यथा स एतानि प्राप्तवान् तथैव तयोः सन्ततिः अपि एतानि दिव्यास्त्राणि प्राप्स्यति। सीता रामं वदति यत् - सा तस्य वचनेन अनुगृहीता अस्ति इति।

तदनु लक्ष्मणः मिथिलावृत्तान्तात्मकं चित्रं प्रदर्शयति। तत्र श्रीरामस्य चित्रम् अवलोक्य सीता तस्य देहादिसौन्दर्यं वर्णयति। ततः स कथं अनायासेन हरशरासनम् अखण्डयत् इति कथयति। ततः तेषां विवाहकालीनानि चित्राणि आगतानि यत्र विवाहात् पूर्वं चत्वारः भ्रातरः रामलक्ष्मणभरतशत्रुघ्नाः केशदानरूपं मङ्गलकार्यं कुर्वन्तः सन्ति। तत्र एकत्र स्वयं जनकः तस्य पुरोहितः शतानन्दः च वसिष्ठादीनां वरपक्षीयाणां सत्काररतौ आस्ताम्। ततः श्रीरामः तयोः विवाहस्य माहात्म्यम् वर्णयति। सः कथयति यत् जनकरघुवंशयोः च मध्ये सम्बन्धः कस्य न अभीष्टः इति। पुनश्च यस्मिन् विवाहे कन्यादाता कन्याग्राहकः च स्वयं विश्वामित्रः। पुरोहितः सीतायाः कङ्कणशोभितं हस्तं तस्य हस्तस्य उपरि स्थापनान्तरं श्रीरामः आनन्दितः अभवत्।

ततः ते क्रमेण भरतपत्नीं माण्डवीं शत्रुघ्नपत्नीं श्रुतकीर्तिं लक्ष्मणपत्नीम् ऊर्मिलां च पश्यन्ति। तदनन्तरम् एकस्मिन् चित्रे ते परशुरामम् पश्यन्ति। ततः यावत् लक्ष्मणः श्रीरामेण महावीरः परशुरामः पराजितः इति रामपराक्रमं वर्णयितुं प्रारभते तावत् श्रीरामः तं बाधित्वा प्रसङ्गम् एव परिवर्तयति। रामस्य एवंविधं विनयम् अवलोक्य सीता मुग्धा भवति। परस्मिन् चित्रे ते पश्यन्ति यत् ते सर्वे भ्रातरः विवाहानन्तरं सपत्नीका अयोध्यां प्राप्ताः। श्रीरामः - मातृषु पितृषु सततं तेषां सुखादिविषये चिन्तयत्सु

कथं सुखेन तेषां दिनानि गच्छन्ति स्म, कथं सीतायाः अपरिसीमं सौन्दर्यम् अवलोक्य तस्य मातरः स्वयं स च कौतुकाक्रान्ताः सञ्जाताः इत्यादिकं सर्वं मनोरमरीत्या वर्णयति।

ततः रामो मन्थरावृत्तान्तं त्यक्त्वा चित्रालिखितम् इङ्गुदीपादपं दृष्ट्वा कथयति अत्रैव तस्य निषादराजेन गुहेन सह साक्षात्कारः सम्पन्नः। एवं समासेनास्य पाठस्य सारः प्रस्तुतः।

## पाठान्तप्रश्नाः

१. दिव्यास्त्रवृत्तान्तं ब्रह्मादयो ब्रह्महिताय इत्यादिश्लोकव्याख्यानपुरःसरं वर्णयत।

२. सीतया कृतं रामवर्णनं यथामति लिख्यताम्।

३. समयः स वर्तते इति श्लोकं व्याख्यात।

४. विवाहवृत्तान्तं वर्णयत।

५. प्रतनुविरलैः इत्यादिश्लोकं व्याख्यात।

## पाठगतप्रश्नानामुत्तराणि

१. दिव्यास्त्राणि कृशाश्वाद् विश्वामित्रेण सम्प्राप्तानि।

२. रामचन्द्रेण ताटकावधसमये विश्वामित्राद् दिव्यास्त्राणि आप्तानि।

३. ब्रह्मादयः वेदस्य संरक्षणाय तपः कृतवन्तः।

४. ब्रह्मादयः शरदां परःसहस्रं तपः कृतवन्तः।

५. ते स्वकीयानि तेजांसि इव दिव्यास्त्राणि अपश्यन्।

६. उपजातिच्छन्दसः लक्षणं तावद् -

"अनन्तरिदीरितलक्ष्मभाजौ
पादौ यदीयावुपजातयस्ते।"

७. अप्रसादानि प्रसादानि कृतानि इति प्रसादशब्दाद् च्विप्रत्यये करोतेरनुप्रयोगे क्तप्रत्यये प्रथमाबहुवचने प्रसादीकृतानि इति रूपम्।

८. आर्यपुत्रः प्रस्फुटन्नवनीलोत्पलसदृशश्यामलेन स्निग्धेन मसृणेन बलवता शरीरसौन्दर्येण विस्मयस्तिमितजनकदृश्यमानसुन्दरश्रीः हेलया खण्डितशङ्करशरासनः शिखण्डमुग्धमुखमण्डलः आलिखितः।

९. अनादरेण खण्डितम् अनादरखण्डितमिति तृतीयातत्पुरुषसमासः। शङ्करस्य शरासनं शङ्करशरासनमिति षष्ठीतत्पुरुषसमासः। अनादरखण्डितं शङ्करशरासनं येन सः अनादरखण्डितशङ्करशरासनः इति बहुव्रीहिसमासः।।

१०. सीतायाः तातः वसिष्ठादीन् सम्बन्धिनः अर्चति।

११. जनकस्य पुरोहितः गौतमः शतानन्दः।

१२. जनकेन सह गोतमसुतः शतानन्दः वसिष्ठादीन् अर्चति।

१३. जनकवंशस्य रघुवंशस्य च सम्बन्धः समेषां प्रियः।

१४. सम्बन्धे दाता ग्रहीता च कुशिकनन्दनः विश्वामित्रः।

१५. रामादयः भ्रातरः चित्रे विवाहकालकृतगोदानमङ्गलाः विवाहदीक्षिता दृश्यन्ते।

१६. तस्मिन्नेव काले इत्यनेन विवाहकालः अभिप्रेतः।

१७. सीतायाः करः शतानन्देन रामस्य हस्ते अर्पितः।

१८. आगृहीतकमनीयकङ्कणः मूर्तिमान् महोत्सव इव सीतायाः करः।

१९. सीतायाः हस्तः मूर्तिमान् महोत्सव इव रामम् आनन्दितम् अकरोत्।

२०. मञ्जुभाषिणीवृत्तस्य लक्षणम् - "सहसा जगौ भवति मञ्जुभाषिणी" इति।

२१. रामः विनयमाहात्म्येन शोभते।

२२. श्रीरामस्य विवाहात्परं राज्यादिविषये तज्जनकः दशरथः चिन्तनं करोति स्म।

२३. दशरथे जीविते नवदारपरिग्रहात्परं मातृभिः परिपाल्यमानानां रामादीनां दिवसाः सानन्दं गताः।

२४. सीतायाः केशाः प्रतनुविरलाः कपालप्रान्ते विकसन्तः मनोहराः सन्ति।

२५. सीतायाः दन्ताः कुसुमसदृशाः भवन्ति।

२६. सीतायाः मुखं मुग्धालोकम्।

सीताया ललितादपि ललिताः चन्द्रिकासदृशाः स्वाभाविकविलासाः मधुराः अवयवाः।

२७. शृङ्गवेरपुरे इङ्गुदीपादपस्य समीपे निषादराजेन सह रामस्य साक्षात्कारः सम्पन्नः।

॥ इति चतुर्दशः पाठः ॥

# १५

# उत्तररामचरितम् - चित्रदर्शनम् - २

## प्रस्तावना

पूर्वस्मिन् पाठे अस्माभिः रामसीतालक्ष्मणाः विवाहात् परम् अयोध्यायां कथं स्थिताः इति आलोचितम्। विराधवृत्तान्तः मन्थरावृत्तान्तः गुहसाक्षात्कारः इत्यपि वयम् आलोचितवन्तः। अस्मिन् पाठे प्रथमतः सीता चित्रमध्ये रामलक्ष्मणयोः जटासंयमनवृत्तान्तं पश्यति। तदनु वनमार्गेण गमनकाले तैः यत् प्राकृतिकसौन्दर्यम् अवलोकितं तस्य चित्राणि ते पश्यन्ति। प्रसङ्गेऽस्मिन् भागीरथीनदी , श्यामनामकः वटवृक्षः, प्रस्रवणनामकः पर्वतः, विन्ध्यारण्यम् इत्येतेषां चित्रदर्शनम् अस्मिन् पाठे आलोचितम्।

## उद्देश्यानि

अमुम् पाठं पठित्वा भवान् -

- रामस्य सीतायाः च कांश्चन विशेषगुणान् ज्ञातुं शक्नुयात्।
- भागरथीं श्यामवृक्षं प्रस्रवणपर्वतं विन्ध्यारण्यं च जानीयात्।
- सीतारामयोः सुदृढं प्रेम जानीयात्।
- छन्दसां लक्षणानि अवगच्छेत्।
- श्लोकानाम् अन्वयं प्रतिपदार्थादिकं च अवगच्छेत्।
- दीर्घानां पदानां विग्रहवाक्यं समासं च बोद्धुं समर्थः भवेत्।

## १५.१) सम्पूर्णः मूलपाठः

**सीता -** **अह्मो एसो जडासंजमणवुत्तन्तो। (अहो एष जटासंयमनवृत्तान्तः।)**

**लक्ष्मणः -**

**पुत्रसङ्क्रान्तलक्ष्मीकैर्यद् वृद्धेक्ष्वाकुभिर्धृतम्।**
**धृतं बाल्ये तदार्येण पुण्यमारण्यकव्रतम् ॥२२॥**

**सीता -** **एषा पषण्णपुण्णसलिला भअवदी भाईरही। (एषा प्रसन्नपुण्यसलिला भगवती भागीरथी।)**

रामः - रघुकुलदेवते ! नमस्ते।

तुरगविचयव्यग्रानुर्वीभिदः सगराध्वरे
कपिलमहसा रोषात्प्लुष्टान् पितुश्च पितामहान्।
अगणिततनूतापस्तप्त्वा तपांसि भगीरथो
भगवति! तव स्पृष्टानद्भिश्चिरादुदतीतरत् ॥२३॥

सा त्वमम्ब ! स्नुषायामरुन्धतीव सीतायां शिवानुध्याना भव।

लक्ष्मणः - एष भरद्वाजावेदितश्चित्रकूटयायिनि वर्त्मनि वनस्पतिः कालिन्दीतटे वटः श्यामो नाम।

(रामः सस्पृहमवलोकयति।)

सीता - सुमेरदि वा तं पदेसं अज्जउत्तो? (स्मरति वा तं प्रदेशमार्यपुत्रः?)

रामः - अयि कथं विस्मर्यते ?

अलसललितमुग्धान्यध्वसम्पातखेदा-
दशिथिलपरिम्भैर्दत्तसंवाहनानि।
परिमृदितमृणालीदुर्बलान्यङ्गकानि
त्वमुरसि मम कृत्वा यत्र निद्रामवाप्ता।।२४।।

लक्ष्मणः - एष विन्ध्याटवीमुखे विराधसंवादः।

सीता - अलंदाव एदिणा। पेक्खम्मि दाव अज्जउत्तसहत्तधरिदतालबुन्तादवत्त-निवारिदादपं दक्खिणारण्णप्पवेशारम्भम्। (अलं तावदेतेन। पश्यामि तावदार्यपुत्रस्वहस्तधृततालवृन्तातपत्रनिवारितातपमात्मनो दक्षिणारण्यप्रवेशारम्भम्।)

एतानि तानि गिरिनिर्झरिणीतटेषु
वैखानसाश्रिततरूणि तपोवनानि।
येष्वातिथेयपरमा यमिनो भजन्ते
नीवारमुष्टिपचना गृहिणो गृहाणि ॥२५॥

लक्ष्मणः - अयमविरलानोकहनिवहनिरन्तरस्निग्धनीलपरिसरारण्यपरिणद्ध-गोदावरीमुखरकन्दरः सन्ततमभिष्यन्दमानमेघमेदुरितनीलिमाजनस्थानमध्यगो गिरिः प्रस्रवणो नाम।

स्मरसि सुतनु तस्मिन्पर्वते लक्ष्मणेन
प्रतिविहितसपर्यासुस्थयोस्तान्यहानि।
स्मरसि सरसनीरां तत्र गोदावरीं वा
स्मरसि च तदुपान्तेष्वावयोर्वर्तनानि।। २६।।

किं च,

किमपि किमपि मन्दं मन्दमासत्तियोगा-
दविरलितकपोलं जल्पतोरक्रमेण।
अशिथिलपरिरम्भव्यापृतैकैकदोष्णो-
रविदितगतयामा रात्रिरेव व्यरंसीत्।। २७।।

लक्ष्मणः - एषा पञ्चवट्यां शूर्पणखा।

सीता - हा अज्जउत्त, एत्तिअं दे दंसणं। (हा आर्यपुत्र, एतावत् ते दर्शनम्।)

रामः - अयि विप्रयोगत्रस्ते, चित्रमेतत्।

सीता- जहा तहा होदु। दुज्जणो असुहं उप्पदेइ। (यथा तथा भवतु। दुर्जनः असुखमपुत्पादयति।)

रामः - हन्त, वर्तमान इव मे जनस्थानवृत्तान्तः प्रतिभाति।

लक्ष्मणः - अथेदं रक्षोभिः कनकहरिणच्छद्मविधिना
तथा वृत्तं पापैर्व्यथयति यथा क्षालितमपि।
जनस्थाने शून्ये विकलकरणैरार्यचरितै-
रपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम्।।२८।।

## १५.२) साम्प्रतं मूलपाठम् अवगच्छाम - २०

सीता - अह्मो एसो जडासंजमणवुत्तन्तो। (अहो एष जटासंयमनवृत्तान्तः।)

लक्ष्मणः - पुत्रसङ्क्रान्तलक्ष्मीकैर्यद् व्रुद्धेक्ष्वाकुभिर्धृतम्।
धृतं बाल्ये तदार्येण पुण्यमारण्यकव्रतम् ॥२२॥

सीता - एषा पषण्णपुण्णसलिला भअवदी भाईरही। (एषा प्रसन्नपुण्यसलिला भगवती भागीरथी।)

रामः - रघुकुलदेवते ! नमस्ते।

तुरगविचयव्यग्रानुर्वीभिदः सगराध्वरे
कपिलमहसा रोषात्प्लुष्टान् पितुश्च पितामहान्।
अगणिततनूतापस्तप्त्वा तपांसि भगीरथो
भगवति! तव स्पृष्टानद्भिश्चिरादुदतीतरत् ॥२३॥

सा त्वमम्ब ! स्नुषायामरुन्धतीव सीतायां शिवानुध्याना भव।

**अन्वयः -**

**सीता** - अहो एष जटासंयमनवृत्तान्तः।

**लक्ष्मणः** - पुत्रसङ्क्रान्तलक्ष्मीकैः वृद्धेक्ष्वाकुभिः यत् (व्रतं) धृतं तत्पुण्यम् आरण्यकव्रतम् आर्येण बाल्ये धृतम्॥२२॥

**सीता** - एषा प्रसन्नपुण्यसलिला भगवती भागीरथी।

**रामः** - रघुकुलदेवते! नमस्ते।

हे भगवति, भगीरथः अगणिततनूतापः सन् तपांसि तप्त्वा तव अद्भिः स्पृष्टान् सगराध्वरे तुरगविचयव्यग्रान् उर्वीभिदः रोषाद् कपिलमहसा प्लुष्टान् च पितुः पितामहान् चिरात् उदतीतरत्॥२३॥

सा त्वम् अम्ब! स्नुषायां सीतायाम् अरुन्धती इव शिवानुध्याना भव।

### अन्वयार्थः -

**सीता** - अहो आश्चर्यम् एषः अयं जटासंयमनवृत्तान्तः जटाबन्धनस्य वृत्तान्तः।

**लक्ष्मणः** - पुत्रसङ्क्रान्तलक्ष्मीकैः पुत्रान् आश्रिता लक्ष्मीः श्रीः येषां तैः वृद्धेक्ष्वाकुभिः वृद्धैः इक्ष्वाकुवंशोत्पन्नैः नृपैः यद् धृतं यद् आरण्यकव्रतं वानप्रस्थव्रतं गृहीतम् तत्पुण्यं पवित्रं वानप्रस्थव्रतम् आर्येण रामेण बाल्ये बाल्यकाले धृतम् अङ्गीकृतम्।॥२२॥

**सीता** - एषा इयं प्रसन्नपुण्यसलिला निर्मलपवित्रजलपूर्णा भगवती देवी भागीरथी गङ्गा।

**रामः** - रघुकुलदेवते भागीरथि नमः नमस्कारः तुभ्यम्।

हे भगवति देवि, भगीरथः अस्मत्पूर्वजः अगणिततनुतापः उपेक्षितदेहदुःखः सन् तपांसि तप्त्वा तपस्याः कृत्वा तव भवत्याः अद्भिः जलैः स्पृष्टान् आमृष्टान् सगराध्वरे सगरयज्ञे तुरगविचयव्यग्रान् तुरगस्य अश्वस्य विचये अन्वेषणे व्यग्रान् व्याकुलान् उर्वीभिदः पृथिवीविदारकान् रोषात् क्रोधात् कपिलमहसा कपिलमुनितेजसा प्लुष्टान् दग्धान् पितुः जनकस्य पितामहान् सगरात्मजान् चिराद् बहुसमयाद् अनन्तरम् उदतीतरत् उद्धारयामास॥२३॥

सा त्वं भवती अम्ब हे मातः, स्नुषायां वध्वां सीतायाम् अरुन्धती वसिष्ठपत्नी इव शिवानुध्याना मङ्गलचिन्तनपरा भव।

### व्याख्यानम् -

सीता जटाबन्धनवृत्तान्तम् अपश्यत्। रामः लक्ष्मणः च शृङ्गवेरपुरे एव जटाबन्धनम् अकरोत्। अत्र लक्ष्मणः श्रीरामस्य व्रतपालनरूपेन गुणेन इक्ष्वाकुवंशीयेभ्यः नृपेभ्यः उत्कृष्टतां वर्णयति। इक्ष्वाकुवंशस्य राजानः सम्पूर्णं जीवनं व्याप्य राज्यसमृद्ध्यादिसुखम् अनुभवन्ति। यदा वार्धक्यकालः समापतति तदा ते राज्यस्य भारं पुत्रेभ्यः समर्प्य वानप्रस्थव्रतम् आश्रयन्ति। अर्थात् सर्वविधानि सुखानि लब्ध्वा ते अन्ते व्रतम् आश्रयन्ति। किन्तु श्रीरामः शैशवे एव एतद् दुष्करं व्रतं समाचरत्। व्रतपालनाय स वार्धक्यकालपर्यन्तम् अपेक्षां न अकरोत्। एवं श्रीरामः बाल्ये एव पवित्रं वानप्रस्थाश्रमम् आचरितवान्।

सीता चित्रे भागीरथीनदीं पश्यति यस्याः जलं निर्मलं पवित्रं च वर्तते। एषा च नदी रघुवंशस्य पूर्वजेन भगीरथेन तपसा स्वर्गतः पृथिवीलोकं प्रति आनीता। अतः सा भागीरथी रघुवंशस्य कुलदेवता अस्ति। अतः तां नदीं श्रीरामः नमस्करोति।

अत्र श्रीरामः गङ्गायाः स्वर्गलोकतः भूलोकागमनवृत्तान्तं वर्णयति। प्राचीनकाले सगरनामकः नृपः अश्वमेधनामकं यज्ञम् अकरोत्। अश्वमेधयज्ञे अश्वः एव प्रधानः भवति। तं च अश्वम् इन्द्र कपटताम् आश्रित्य अचोरयत् किञ्च गुप्तस्थाने अस्थापयत्। अश्वं विना यज्ञसमाप्तिः न भविष्यति। अतः सगरस्य षष्टिसहस्रं पुत्राः अश्वम् अनुसन्दधानाः पृथिवीं भिन्दन्ति स्म। तस्मिन् एव महर्षिः कपिलः केनचित् कारणेन कुपितः सन् तान् सर्वान् अपि पुत्रान् भस्मावशेषान् अकुर्वन्। भागीरथीजलस्पर्शेन एव ते पुत्राः उद्धारं प्राप्तुं समर्थाः। किन्तु भागीरथी तदा स्वर्गे आसन्। बहुकालात् परं सगरस्य प्रपौत्रः भगीरथः कठोरतपसा भागीरथीं भूलोकम् आनीय तस्याः जलेन षष्टिसहस्रपुत्राणाम् उद्धारं कृतवान्।

रामः भागीरथीम् अम्ब इति उक्त्वा सम्बोधयति किञ्च सीतायाः मङ्गलविधानाय प्रार्थयति।

**विशेषटिप्पणी -**

शिवानुध्याना भवेत्यत्र बीजार्थस्य प्ररोहत्वाद् उद्भेदनामकं सन्ध्यङ्गम्। तल्लक्षणं तावत् - “बीजार्थस्य प्ररोहः स्यादुद्भेदः” इति।

**व्याकरणविमर्शः -**

१. पुत्रसङ्क्रान्तलक्ष्मीकैः- पुत्रेषु सङ्क्रान्ता पुत्रसङ्क्रान्ता इति सप्तमीतत्पुरुषः। पुत्रसङ्क्रान्ता लक्ष्मीः येषां तैः इति बहुव्रीहिसमासः।

२. आरण्यकम् - अरण्ये भवा इत्यर्थे अरण्यशब्दाद् वुञ्प्रत्यये आरण्यकाः इति निष्पद्यते। आरण्यकानामिदम् इति विग्रहे आरण्यकशब्दाद् अणि आरण्यकम् इति रूपम्।

३. तुरगविचयव्यग्रान्- तुरेण गच्छतीति तुरगः। तस्य विचयः तुरगविचयः इति षष्ठीतत्पुरुषः। तस्मिन् व्यग्रान् तुरगविचयव्यग्रान् इति सप्तमीतत्पुरुषः।

४. उदतीतरत्– उत्पूर्वकात् तृधातोः णिचि लुङि उदतीतरत् इति रूपम्।

**छन्दः** - तुरगविचयव्यग्रान् इत्यस्मिन् श्लोके हरिणीच्छन्दः। तल्लक्षणं- “रसयुगहयैन्सौम्रौस्लौ गौ यदा हरिणी तदा।” इति।

## पाठगतप्रश्नाः - १

१. रामलक्ष्मणयोः जटाबन्धनं कुत्र सञ्जातम्।

२. इक्ष्वाकुवंशीयाः कदा वानप्रस्थाश्रमं पालयति।

३. भागीरथी कीदृशी वर्तते।

४. कः भागीरथीं स्वर्गतः मर्त्यलोकम् आनीतवान्।

५. सा सीतायां कीदृशी भवेदिति रामस्य प्रार्थना।



## १५.३) साम्प्रतं मूलपाठम् अवगच्छाम - २१

**लक्ष्मणः -** **एष भरद्वाजावेदितश्चित्रकूटयायिनि वर्त्मनि वनस्पतिः कालिन्दीतटे वटः श्यामो नाम।**

**(रामः सस्पृहमवलोकयति।)**

**सीता -** **सुमेरदि वा तं पदेसं अज्जउत्तो? (स्मरति वा तं प्रदेशमार्यपुत्रः?)**

**रामः -** **अयि कथं विस्मर्यते ?**

**अलसललितमुग्धान्यध्वसम्पातखेदा-**
**दशिथिलपरिम्भैर्दत्तसंवाहनानि।**
**परिमृदितमृणालीदुर्बलान्यङ्गकानि**
**त्वमुरसि मम कृत्वा यत्र निद्रामवाप्ता।।२४।।**

**अन्वयः -**

**लक्ष्मणः** - एष भरद्वाजावेदितः चित्रकूटयायिनि वर्त्मनि वनस्पतिः कालिन्दीतटे श्यामो नाम वटः।

(रामः सस्पृहम् अवलोकयति।)

**सीता** - आर्यपुत्र, तं प्रदेशं स्मरति वा?

**रामः** - अयि कथं विस्मर्यते ?

यत्र त्वम् अध्वसम्पातखेदात् अलसललितमुग्धानि अशिथिलपरिरम्भैः दत्तसंवाहनानि परिमृदितमृणालीदुर्बलानि अङ्गकानि मम उरसि कृत्वा निद्राम् अवाप्ता।।२४।।

**अन्वयार्थः -**

**लक्ष्मणः** - एषः अयं भरद्वाजावेदितः मुनिना भरद्वाजेन विज्ञापितः चित्रकूटयायिनि चित्रकूटपर्वताभिगामिनि वर्त्मनि मार्गे वनस्पतिः वृक्षः कालिन्दीतटे कालिन्दीनद्याः तीरे वटः श्यामो नाम श्यामनामकः वटवृक्षः।

(रामः सस्पृहम् सोत्कण्ठम् अवलोकयति पश्यति)

**सीता** - आर्यपुत्र, तं प्रदेशं स्थानं स्मरति वा।

**रामः** - अयि कथं केन प्रकारेण विस्मर्यते विस्मरामि।

यत्र यस्मिन् प्रदेशे त्वं सीता अध्वसम्पातखेदात् मार्गगमनपरिश्रमात् अलसललितमुग्धानि अलसानि आलस्ययुक्तानि ललितानि कोमलानि मुग्धानि सुन्दराणि अशिथिलपरिरम्भैः गाढालिङ्गनैः दत्तसंवाहनानि कृतमर्दनानि परिमृदितमृणालीदुर्बलानि परिमृदिताश्च ताः मृणाल्यः ता इव दुर्बलानि कृशानि अङ्गकानि शरीरावयवान् मम रामस्य उरसि वक्षःस्थले कृत्वा निधाय निद्रां स्वापम् अवाप्ता प्राप्ता।।२४।।

**व्याख्यानम् -**

वनवासकाले महर्षिः भरद्वाजः तेभ्यः चित्रकूटवनं प्रति गमनमार्गं ज्ञापितवान्। तस्मिन् गमनमार्गे यमुनानद्याः तीरे ते श्यामनामकं वटवृक्षं चित्रे पश्यति सीता। तदा सीता रामं - स्मरति वा एतं प्रदेशम् इति पृच्छति। तदा रामः वदति यत् तस्य प्रदेशस्य स्मरणम् असम्भवम्। ततः रामः अविस्मरणहेतुं कथयति - सीता मार्गपरिश्रमात् अतीव श्रान्ता आसीत्। सीतायाः अङ्गानि आलस्ययुक्तानि परिश्रान्तानि च आसन् किन्तु तानि तेषां सौन्दर्यं न अत्यजन्त। तां च श्रान्ताम् अवलोक्य श्रीरामः तां दृढतया आलिङ्गितवान्। तेन आलिङ्गनेन सीताया पद्मदण्डानि इव कोमलानि अङ्गानि विदलितानि। अतीव परिश्रान्ता सीता तदा रामस्य दृढालिङ्गनं प्राप्य तस्य वक्षस उपरि एव स्थित्वा स्वापं कृतवती। एवं रामसीतयोः मध्ये प्रेमप्राचुर्यं प्रस्तुतेन श्लोकेन वर्णयति कविः।

**व्याकरणविमर्शः -**

१. भरद्वाजावेदितः- भरद्वाजेन आवेदितः भरद्वाजावेदितः इति तृतीयातत्पुरुषसमासः।

२. चित्रकूटयायिनि- चित्रकूटं याति इति चित्रकूटयायि, तस्मिन् चित्रकूटयायिनि।

३. वनस्पतिः– वनस्य पतिः, पास्करादित्वात् सुट्।

**छन्दः -**

१. अलसललितेत्यस्मिन् श्लोके मालिनीछन्दः। तल्लक्षणं तावत् - "ननमयययुतेयं मालिनी भोगिलोकैः" इति।

**अलङ्कारविमर्शः -**

१. अलसललितेत्यस्मिन् श्लोके आदौ अध्वखेदः, ततः ललितत्वसौकुमार्यभावः, ततः दर्शनाद् अशिथिलालिङ्गनबाहुल्यम्, ततः तत्संवाहनता, ततः दौर्बल्यम्, ततः रामवक्षसि लग्नता, ततो निद्रावाप्तिरिति परं परं प्रति पूर्वपूर्वस्य हेतुतया कारणमालालङ्कारः। तल्लक्षणं दर्पणे -

"परं परं प्रति यदा पूर्वपूर्वस्य हेतुता।

तदा कारणमाला स्यात्" इति।

## पाठगतप्रश्नाः - २

६. भरद्वाजावेदितस्य वनस्पतेः किं नाम।

७. वटवृक्षः कस्याः नद्याः तीरे वर्तते।

८. सीताया अङ्गानि कथम् आलस्ययुक्तानि।

९. सीता कुत्र कथं शेते।

## १५.४) साम्प्रतं मूलपाठम् अवगच्छाम - २२

**लक्ष्मणः -** **एष विन्ध्याटवीमुखे विराधसंवादः।**

**सीता -** **अलंदाव एदिणा। पेक्खम्मि दाव अज्जउत्तसहत्तधरिदतालबुन्तादवत्त-निवारिदादपं दक्खिणारण्णप्पवेशारम्भम्। (अलं तावदेतेन। पश्यामि तावदार्यपुत्रस्वहस्तधृततालवृन्तातपत्रनिवारितातपमात्मनो दक्षिणारण्यप्रवेशारम्भम्।)**

**एतानि तानि गिरिनिर्झरिणीतटेषु**
**वैखानसाश्रिततरूणि तपोवनानि।**
**येष्वातिथेयपरमा यमिनो भजन्ते**
**नीवारमुष्टिपचना गृहिणो गृहाणि ॥२५॥**

### अन्वयः -

**लक्ष्मणः** - एष विन्ध्याटवीमुखे विराधसंवादः।

**सीता** - अलं तावद् एतेन। पश्यामि तावद् आर्यपुत्रस्वहस्तधृतताल-वृन्तातपत्रनिवारितातपम् आत्मनो दक्षिणारण्यप्रवेशारम्भम्।

गिरिनिर्झरिणीतटेषु वैखानसाश्रिततरूणि एतानि तानि तपोवनानि (सन्ति) येषु आतिथेयपरमाः नीवारमुष्टिपचना यमिनो गृहिणः गृहाणि भजन्ते॥२५॥

### अन्वयार्थः -

**लक्ष्मणः** - एषः अयं विन्ध्याटवीमुखे विन्ध्यारण्यस्य प्रारम्भे विराधसंवादः विराधराक्षसस्य वृत्तान्तः।

**सीता** - अलं पर्याप्तं तावत् एतेन अनेन। तावत् आर्यपुत्रस्वहस्तधृततालवृन्तातपत्रनिवारितातपम् आर्यपुत्रेण स्वामिना श्रीरामेण स्वहस्तेन निजकरेण धृतं गृहीतं तालवृन्तं तालपत्ररूपम् आतपत्रं छत्रं तेन निवारितः आतपः निदाघः यस्मिन् तम् आत्मनः स्वस्य दक्षिणारण्यप्रवेशारम्भम् दक्षिणारण्ये प्रवेशस्य आरम्भं पश्यामि अवलोकयामि।

गिरिनिर्झरिणीतटेषु पर्वतनदीतीरेषु वैखानसाश्रिततरूणि वानप्रस्थाश्रमसेवितानि एतानि पुरोदृश्यमानानि तानि प्रसिद्धानि तपोवनानि सन्ति। येषु तपोवनेषु आतिथेयपरमाः अतिथिसत्कारप्रधानाः नीवारमुष्टिपचना मुष्टिपरिमितान्नपाचकाः यमिनः संयमिनः मुनयः गृहिणः गृहस्थाः सपत्नीकाः गृहाणि वासस्थानानि भजन्ते सेवन्ते॥२५॥

### व्याख्यानम् -

लक्ष्मणः तौ विराधराक्षससंवादं दर्शितवान्। विन्ध्यारण्यप्रवेशमुखे विराधनामकः राक्षसः रामं लक्ष्मणं च भक्षितुं प्रयत्नं कृतवान्। किन्तु तदा रामः तं राक्षसं निहतवान्। अस्य वृत्तान्तस्य अनिष्टत्वात्

सीता तत् चित्रं द्रष्टुम् अनिच्छां प्रदर्शितवती। अतः सा दक्षिणारण्यप्रवेशं पश्यति यत्र श्रीरामः तालवृन्तम् आतपत्रं कृत्वा आतपं निवारयितुं चेष्टमानः वर्तते।

अस्मिन् चित्रे रामसीतालक्ष्मणाः विन्ध्यारण्यं प्रविष्टाः। चित्रम् अवलोक्य श्रीरामः मुग्धः सन् विन्ध्यारण्यं वर्णयितुं प्रवृत्तः। विन्ध्यपर्वते अरण्यम् इदं वर्तते। अतः अरण्यस्य पार्श्वे एव पार्वत्यनद्यः सच्छन्दं प्रवहन्ति। इदम् अरण्यं न मनुष्यहीनम्। यतो हि अस्य वृक्षाणाम् अधः वार्धक्यकाले वानप्रस्थाश्रमम् आश्रयन्तः जनाः निवसन्ति। अस्मिन् च वने बहवः मुनयः सपरिवाराः तिष्ठन्ति। ते मुनयः मुष्टिपरिमितं नीवारधान्यं भुक्त्वा एव जीवनधारणं कुर्वन्ति। अपि च वनं प्रति आगतानां सर्वेषां जनानां अतिथिज्ञानेन सम्यक् सत्कारादिकं करोति। एवं ते अतिथिदेवो भव इति उपनिषद्वाक्यं सम्यक् पालयन्ति इति वक्तुम् इच्छति रामः। एतादृशानां पुण्यवतां मुनीनां तपः कुर्वतां वानप्रस्थिनां च सम्बन्धात् विन्ध्यारण्यमिदं तपोवनं सञ्जातम्। अतः तत्र गत्वा ते धन्याः एव अभवन् इति रामस्य आकूतम्।

**व्याकरणविमर्शः -**

१. निर्झरिणी- निर्झरशब्दात् इनिप्रत्यये ङीपि च निर्झरिणी इति रूपम्।

२. वैखानसाश्रिततरूणि- वैखानसैः आश्रिताः तरवः येषु तथोक्तानि इति बहुव्रीहिसमासः।

**छन्दः -**

१. एतानि तानि इत्यस्मिन् श्लोके वसन्ततिलकं छन्दः।

### पाठगतप्रश्नाः - ३

१०. विन्ध्याटवीमुखे कः संवादः अभवत्।

११. विन्ध्यारण्ये वृक्षाः कथम् आसन्।

१२. मुनयः किं खादन्ति स्म।

## १५.५) साम्प्रतं मूलपाठम् अवगच्छाम - २३

**लक्ष्मणः -** **अयमविरलानोकहनिवहनिरन्तरस्निग्धनीलपरिसरारण्यपरिणद्ध-गोदावरीमुखरकन्दरः सन्ततमभिष्यन्दमानमेघमेदुरितनीलिमाजनस्थानमध्यगो गिरिः प्रस्रवणो नाम।**

**स्मरसि सुतनु तस्मिन्पर्वते लक्ष्मणेन**
**प्रतिविहितसपर्यासुस्थयोस्तान्यहानि।**
**स्मरसि सरसनीरां तत्र गोदावरीं वा**
**स्मरसि च तदुपान्तेष्वावयोर्वर्तनानि।। २६।।**

**किं च,**

**किमपि किमपि मन्दं मन्दमासत्तियोगा-**
**दविरलितकपोलं जल्पतोरक्रमेण।**
**अशिथिलपरिरम्भव्यापृतैकैकदोष्णो-**
**रविदितगतयामा रात्रिरेव व्यरंसीत्।। २७।।**

**अन्वयः -**

**लक्ष्मणः** - अयम् अविरलानोकहनिवहनिरन्तरस्निग्धनील-परिसरारण्यपरिणद्धगोदावरीमुखरकन्दरः सन्ततम् अभिष्यन्दमानमेघमेदुरितनीलिमा जनस्थानमध्यगो प्रस्रवणो नाम गिरिः।

सुतनु तस्मिन् पर्वते लक्ष्मणेन प्रतिविहितसपर्यासुस्थयोः (आवयोः) तानि अहानि स्मरसि (अथवा) तत्र सरसनीरां गोदावरीं स्मरसि (तथा च) तदुपान्तेषु आवयोः वर्तनानि च स्मरसि।।२६।।

किं च, आसत्तियोगात् किमपि किमपि मन्दम् अविरलितकपोलम् अक्रमेण जल्पतोः, अशिथिलपरिरम्भव्यापृतैकदोष्णोः अविदितगतयामा रात्रिः एव व्यरंसीत्।।२७।।

**अन्वयार्थः -**

**लक्ष्मणः** - अयम् एषः अविरलानोकहनिवहनिरन्तरस्निग्ध-नीलपरिसरारण्यपरिणद्धगोदावरीमुखरकन्दरः अविरलाः निबिडाः ये अनोकहाः वृक्षाः तेषां निवहाः समूहाः तैः निरन्तराः घनीभूताः स्निग्धाः चिक्कणाः नीलाः श्यामलाश्च परिसराः प्रान्तभागाः यस्य, तेन अरण्येन वनेन परिणद्धा परिवेष्टिता या गोदावरी नदी, तया मुखराणि गोदावरीकलपूरितानि कन्दराणि गुहाः यस्य तादृशः, सन्ततम् अनवरतम् अभिष्यन्दमानमेघदुरितनीलिमा अभिष्यन्दमानैः स्वयं वर्षद्भिः मेघैः जलधरैः दुरितः स्निग्धीकृतः नीलिमा श्यामलत्वं यस्य तादृशः जनस्थानमध्यगः जनस्थाननामकस्य अरण्यस्य मध्यगः मध्ये स्थितः प्रस्रवणो नाम प्रस्रवणनामकः गिरिः पर्वतः।

हे सुतनु! सुन्दरि ! तस्मिन् पर्वते प्रस्रवणाख्ये अद्रौ लक्ष्मणेन सौमित्रिणा प्रतिविहितसपर्यासुस्थयोः प्रतिविहितया कृतया सेवया सुस्थयोः आवयोः तानि सुखमनुभूतानि अहानि दिनानि स्मरसि अथवा तत्र तस्मिन् स्थाने सरसनीरां सरसजलां गोदावरीं तन्नामिकां नदीं स्मरसि तथा तदुपान्तेषु गोदावरीप्रान्तेषु आवयोः सीतारामयोः वर्तनानि निवास–क्रीडा–भ्रमरादीनि च स्मरसि।।२६।।

किं च, आसत्तियोगात् किमपि किमपि मन्दम् अविरलितकपोलम् अक्रमेण जल्पतोः, अशिथिलपरिरम्भव्यापृतैकदोष्णोः अविदितगतयामा रात्रिः एव व्यरंसीत्

आसत्तियोगात् अनुरागात् अतिसान्निध्यात् किमपि किमपि मन्दं शनैः शनैः अविरलितकपोलं परस्परसंमिलितगण्डम् अन्यैरश्राव्यम् अक्रमेण क्रमरहितेन जल्पतोः वदतोः अशिथिलपरिरम्भव्यापृतैकैकदोष्णोः एकैकभुजेन सुदृढतया समालिङ्गने व्यस्तहस्तयोः आवयोः अविदितगतयामा अज्ञातेन गतप्रहरा रात्रिरेव रजन्येव व्यरंसीत् विरता।। परन्तु आवयोः परस्परजल्पनं न विरतमिति सूचितं भवति।।२७।।

### व्याख्यानम् -

लक्ष्मणः चित्रे जनस्थाननामके अरण्ये स्थितं प्रस्रवणनामकं पर्वतं दृष्ट्वा तस्य प्राकृतिकसौन्दर्यं वर्णयति। अयं पर्वतः घनारण्येन परिपूरितः। अस्मिन् पर्वते गोदावरी नदी प्रवहति स्म। तस्याः तटप्रदेशः श्यामलवनराजिना शोभमानः आसीत्। पर्वतस्य कन्दराणि अपि नद्याः कलकलरवेण मुखरितानि आसन्। मेघाः सततं वर्षन्तः पर्वतं तदुपरि विद्यमानं पादपसमूहं च स्निग्धीकरोति स्म।

अत्र रामः चित्रम् अवलोक्य प्रस्रवणपर्वते तेषां जीवनं कथम् आसीत् इति स्मरति। यदा तौ तस्मिन् पर्वते आस्तां तदा भ्राता लक्ष्मणः निरन्तरं तयोः सेवां कृतवान्। निवासे तयोः कोऽपि क्लेशः न अभवत्। तौ सुखेन तत्र दिनानि यापितवन्तौ। तस्मिन् पर्वते सलिलपूर्णा सरित् गोदावरी प्रवहति। रामः सीता च प्रायः एव तस्याः नद्याः तीरे भ्रमितवन्तौ कदापि तत्र उपविश्य वार्तालापं कृतवन्तौ। चित्रे तं पर्वतम् अवलोक्य रामः इदं सर्वं स्मरति। किञ्च सीता तत् सर्वं स्मरति न वा इति तां पृच्छति। एवं कथोपकथनेन तेषां चित्रदर्शनं प्रवर्तते।

एवं कदाचित् तौ गोदानद्याः तीरे आगत्य वार्तालापं कर्तुम् आरभेताम्। वार्तालापकाले तिष्ठतोः तयोः रात्रिकालः शीघ्रमेव निर्गतः। अर्थात् तौ परस्परं वार्तालापे तथा मग्नौ आसन् यत् तयोः समयज्ञानं नासीत्। एवम्प्रकारेण वनवासकाले तेषां दिनानि अतिवाहितानि इति वर्णयति सीतापतिः श्रीरामः।

### व्याकरणविमर्शः -

१. परिणद्धः- परिपूर्वकात् नह्धातोः क्तप्रत्यये परिणद्धः इति रूपम्।

२. मुखरः- मुखशब्दात् रप्रत्यये मुखरः इति रूपम्, स्वमुखकुञ्जेभ्यो वक्तव्यम् इति वार्तिकेन रप्रत्ययः।

३. अभिष्यन्दमानः- अभिपूर्वकात् स्यन्द्धातोः शानच्प्रत्यये अभिष्यन्दमानः इति रूपम्।

४. नीलिमा- नीलस्य भावः, नीलशब्दात् इमनिच्प्रत्यये नीलिमा इति रूपम्।

५. प्रतिविहितसपर्यासुस्थयोः - प्रतिविहितसपर्यया सुस्थयोः प्रतिविहितसपर्यासुस्थयोः इति तृतीयातत्पुरुषः।

६. आसत्तियोगात् - आङ्पूर्वकात् सद्-धातोः क्तिन्प्रत्यये विभक्त्यादिकार्ये आसत्तिः इति रूपम्। आसत्तेः योगः आसक्तियोगः, तस्मात् आसक्तियोगात् इति षष्ठीतत्पुरुषः।

७. व्यरंसीत् - विपूर्वकात् रम्-धातोः लुङ्लकारे प्रथमपुरुषैकवचने व्यरंसीत् इति रूपम्।

छन्दः-

१. स्मरसि सुतनु इति श्लोके मालिनीछन्दः।

२. किमपि किमपि इति श्लोके मालिनीछन्दः।

### अलङ्कारविमर्शः -

१. स्मरसि सुतनु इति श्लोके एकस्य त्वमिति कर्तुः स्मरसि इति क्रियात्रयेण सम्बन्धाद् दीपकालङ्कारः। तल्लक्षणं दर्पणे -

"अथ कारकमेकं स्यादनेकासु क्रियासु चेत्" इति।

## पाठगतप्रश्नाः - ४

१३. प्रस्रवणो नाम गिरिः कुत्र आसीत्।

१४. तौ कस्याः नद्याः तीरे भ्रमितवन्तौ।

१५. रात्रिः कथं व्यरंसीत्।

१६. तौ कथं जल्पन्तौ आस्ताम्।

१७. व्यरंसीत् इति कस्य धातोः कस्मिन् लकारे भवति।

## १५.६) साम्प्रतं मूलपाठम् अवगच्छाम - २४

**लक्ष्मणः -** **एषा पञ्चवट्यां शूर्पणखा।**

**सीता -** **हा अज्जउत्त, एत्तिअं दे दंसणं। (हा आर्यपुत्र, एतावत् ते दर्शनम्।)**

**रामः -** **अयि विप्रयोगत्रस्ते, चित्रमेतत्।**

**सीता-** **जहा तहा होदु। दुज्जणो असुहं उप्पदेइ। (यथा तथा भवतु। दुर्जनः असुखमपुत्पादयति।)**

**रामः -** **हन्त, वर्तमान इव मे जनस्थानवृत्तान्तः प्रतिभाति।**

**लक्ष्मणः -** **अथेदं रक्षोभिः कनकहरिणच्छद्मविधिना**
**तथा वृत्तं पापैर्व्यथयति यथा क्षालितमपि।**
**जनस्थाने शून्ये विकलकरणैरार्यचरितै-**
**रपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम्।।२८।।**

**अन्वयः -**

**लक्ष्मणः** - एषा पञ्चवट्यां शूर्पणखा।

**सीता** - हा आर्यपुत्र, एतावत् ते दर्शनम्।

**रामः** - अयि विप्रयोगत्रस्ते, एतत् चित्रम्।

**सीता**- यथा तथा भवतु। दुर्जनः असुखमुत्पादयति।

**रामः** - हन्त, वर्तमान इव मे जनस्थानवृत्तान्तः प्रतिभाति।

**लक्ष्मणः** -अथ पापैः रक्षोभिः कनकहरिणच्छद्मविधिना इदं तथा वृत्तं यथा क्षालितम् अपि व्यथयति। शून्ये जनस्थाने विकलकरणैः आर्यचरितैः ग्रावा अपि रोदिति वज्रस्य (अपि) दलति हृदयम्।। २८।।

### अन्वयार्थः -

**लक्ष्मणः** - एषा चित्रालिखिता पञ्चवट्यां शूर्पणखा तन्नामिका राक्षसी रावणभगिनी।

**सीता** - हा आर्यपुत्र, एतावत् एतावत्पर्यन्तं ते तव दर्शनम् ईक्षणम्।

**रामः** - अयि विप्रयोगत्रस्ते वियोगभीते, एतत् चित्रम्।

**सीता**- यथा तथा भवतु कथमपि भवतु। दुर्जनः खलः असुखं दुःखम् उत्पादयति।

**रामः** - हन्त, वर्तमान इव प्रत्यक्षीभूत इव मे मम जनस्थानवृत्तान्तः जनस्थानस्य वृत्तान्तः प्रतिभाति।

**लक्ष्मणः** - अथ शूर्पणखावृत्तान्ताद् अनन्तरं पापैः पापाचारैः रक्षोभिः राक्षसैः कनकहरिणच्छद्मविधिना स्वर्णमृगव्याजकरणेन इदं चित्रनिर्दिष्टं सीताहरणं तथा तादृशं वृत्तं निष्पन्नं यथा यादृशं क्षालितम् प्रतिकृतम् अपि व्यथयति दुःखं जनयति। शून्ये निर्जने जनस्थाने दण्डकारण्ये विकलकरणैः स्वस्वव्यापारशून्यानि इन्द्रियाणि येषु तादृशैः आर्यचरितैः आर्यस्य रामस्य मूर्च्छाप्रभृतिव्यापारैः ग्रावा अपि शिला अपि रोदिति रोदनं करोति वज्रस्य कुलिशस्य (अपि) दलति विदारयति हृदयं मध्यप्रदेशम्।।२८।।

### व्याख्यानम् -

लक्ष्मणः चित्रे पञ्चवट्यां शूर्पणखां दर्शयति। तदा सीता अशुभं द्रष्टुम् अनिच्छन्ती रामं कथयति एतावत्पर्यन्तमेव चित्रदर्शनम् अस्तु इति। तदा रामः सीतां कथयति चित्रमेतद् वास्तविकः वियोगः नास्ति, चिन्ता मास्तु इति। तदा सीता कथयति यथा कथञ्चिद् दुर्जनः दुःखकारणं भवति। ततः लक्ष्मणः चित्रं दृष्ट्वा वर्णयति यदा स्वमृगव्याजेन सीताहरणं रावणेन कृतं तदा रामस्य व्यापारं दृष्ट्वा ग्रावा अपि रोदितवती। किञ्च तस्य क्रन्दनादिकं श्रुत्वा वज्रस्य कठोरस्यापि हृदयं भिन्नम्।

### व्याकरणविमर्शः -

१. पञ्चवटी – पञ्चानां वटानां समाहारः इति विग्रहे निष्पन्नस्य द्विगुसंज्ञकस्य पञ्चवटशब्दस्य अकारान्तत्वाद् "अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः" इति वार्तिकेन स्त्रीलिङ्गे ततः ङीप्।

### छन्दः -

१. अथेदमिति श्लोके शिखरिणीछन्दः। तस्य लक्षणं तावत्– "रसै रुद्रैश्छिन्ना यमनभसलाः गः शिखरिणी" इति।

## पाठगतप्रश्नाः - ५

१८. दुर्जनः किमुत्पादयति।

१९. सीतापहरणं कथं राक्षसेन कृतम्।

२०. रामचरितैः किं किं भवति।

## पाठसारः

इतः परं सीता शृङ्गवेरपुरे रामलक्ष्मणयोः जटाबन्धनस्य चित्रं दर्शयति। ततः लक्ष्मणः रामं प्रशंसन् कथयति - इक्ष्वाकुवंशीयाः राजानः वार्धक्यकाले सम्पत्त्यादिकं पुत्रेभ्यः समर्प्य यद् वानप्रस्थव्रतम् आचरति तत् श्रीरामः बाल्यकाले एव आचरत्। तदनन्तरं सीता चित्रे पुण्यसलिलां भागीरथीं पश्यति। रामः कथयति यत् बहुकालात् पूर्वं सगरनामकः एकः नृपः अश्वमेधनामकं यज्ञम् अकरोत्। तस्य अश्वमेधयज्ञस्य अश्वम् इन्द्रः कपटेन उपायेन चोरयित्वा गुप्तस्थाने अस्थापयत्। अश्वं विना यज्ञसमाप्तिः न भविष्यति। अतः सगरस्य षष्टिसहस्रं पुत्राः अश्वम् अनुसन्दधानाः पृथिवीं भिन्दन्तः महर्षेः कपिलस्य कोपात् भस्मीभूताः। भागीरथीजलस्पर्शेन एव ते पुनः उद्धारं प्राप्स्यन्तीति ज्ञात्वा बहुकालात् परं सगरस्य प्रपौत्रः भगीरथः कठोरतपसा भागीरथीं भूलोकम् आनीय तस्याः जलेन तेषाम् उद्धारं विहितवान्। इयं एव भागीरथी रघुवंशस्य देवता वर्तते। अतः रामः ताम् उद्दिश्य प्रणामं निवेदयति।

ततः लक्ष्मणः चित्रे यमुनानद्याः तटे अवस्थितं श्यामनामकं वटवृक्षम् दर्शयति यं वृक्षं ते चित्रकूटवनगमनमार्गे प्राप्तवन्तः। रामः तस्य वृक्षस्य अधः घटितं वृत्तान्तं वर्णयति। मार्गपरिश्रमेण श्रान्ता सीता रामस्य उरसि रामेण दृढालिङ्गिता सती शयनं कृतवती।

ततः लक्ष्मणः विराधराक्षसवृत्तान्तं दर्शयति। किन्तु सीता तत् चित्रम् अदृष्ट्वा दक्षिणारण्ये तेषां प्रवेशात्मकं चित्रम् द्रष्टुम् आरभते यत्र श्रीरामः तेषां निदाघं दूरीकर्तुं तालवृन्तम् एव आतपत्रीकृतवान्। ततः रामः विन्ध्यारण्यं वर्णयति। तस्मिन् तपोवने वृक्षाणाम् अधः वानप्रस्थाश्रमिणः गृहेषु च मुष्टिपरिमितम् अन्नं भुञ्जानाः अतिथिसत्कारपरायणाः मुनयः पत्न्या सह निवसन्ति स्म।

ततः लक्ष्मणः प्रस्रवणनामकं पर्वतम् दर्शयति यः पर्वतः जनस्थाननामके अरण्ये आसीत्। अयं पर्वतः घनारण्येन परिपूरितः आसीत्। अस्मिन् पर्वते गोदावरी नदी प्रवहति स्म। तस्याः तटप्रदेशः श्यामलवनराजिना शोभमानः आसीत्। पर्वतस्य कन्दराणि अपि नद्याः कलकलरवेण मुखरितानि आसन्। मेघाः सततं वर्षन्तः पर्वतं तदुपरि विद्यमानं पादपसमूहं च स्निग्धीकुर्वन्ति स्म। ततः रामः गोदावरीनदीं तस्याः तटे तयोः भ्रमणं लक्ष्मणेन विहितां तयोः सेवां च स्मरति। कथं तौ वार्तालापरतौ गोदातीरे सम्पूर्णाम् अपि रात्रिं यापितवन्तौ इति अपि स्मरति। एवम् एष गोदावरीवृत्तान्तः समाप्यते।

ततः पञ्चवट्यां शूर्पणखावृत्तान्तं लक्ष्मणः पश्यति। परन्तु तत्र सीताया आग्रहो नास्ति। यतो हि चित्रं दृष्ट्वा अपि सीता खिन्ना भवति। दुर्जनः कथञ्चिद् दुःखम् उत्पादयति एव। ततः सीताहरणात्परं रामस्य क्रन्दनादिव्यापारैः ग्रावा अपि रोदिति वज्रस्य हृदयं च भवति विदीर्णम्। एवं समासतः पाठसारः प्रस्तुतः।

## पाठान्तप्रश्नाः

१. गङ्गानयनवृत्तान्तं सविस्तारं वर्णयत।
२. अलसलुलित इत्यादिश्लोकं यथामति वर्णयत।
३. तेषां दक्षिणारण्यप्रवेशः कथम् आसीत्।
४. प्रस्रवणगिरेः यथाग्रन्थं वर्णनं प्रदीयताम्।
५. मुनयः विन्ध्यारण्ये कथं जीवनं यापयन्ति स्म।
६. रामः सीता च गोदावरीतीरे कथं रात्रियापनं कृतवन्तौ।
७. किमपि किमपि इति श्लोकं व्याख्यात।
८. अथेदं रक्षोभिरिति श्लोकं व्याख्यात।

## पाठगतप्रश्नानामुत्तराणि

१. रामलक्ष्मणयोः जटाबन्धनं शृङ्गवेरपुरे सञ्जातम्।
२. इक्ष्वाकुवंशीयाः वार्धक्यकाले वानप्रस्थाश्रमं पालयन्ति।
३. भागीरथी प्रसन्नपुण्यसलिला भगवती वर्तते।
४. भगीरथः भागीरथीं स्वर्गतः मर्त्यलोकम् आनीतवान्।
५. सा सीतायां अरुन्धती इव शिवानुध्याना भवेदिति रामस्य प्रार्थना।
६. भरद्वाजावेदितस्य वनस्पतेः श्याम इति नाम।
७. वटवृक्षः कालिन्दीनद्याः तीरे वर्तते।
८. सीताया अङ्गानि कथम् मार्गगमनपरिश्रमाद् आलस्ययुक्तानि।
९. सीता स्वस्य अवयवान् रामस्य वक्षसि कृत्वा शेते।
१०. विन्ध्याटवीमुखे विराधसंवादः अभवत्।
११. विन्ध्यारण्ये वृक्षाः वैखानसाश्रिताः आसन्।
१२. मुनयः मुष्टिपरिमितं नीवारधान्यं खादन्ति स्म।
१३. प्रस्रवणो नाम गिरिः जनस्थाननामके अरण्ये आसीत्।

१४. तौ कस्याः गोदावरीनद्याः तीरे भ्रमितवन्तौ।

१५. जल्पतोः सीतारामयोः रात्रिः अविदितगतयामा व्यरंसीत्।

१६. तौ अक्रमेण जल्पन्तौ आस्ताम्।

१७. विपूर्वकात् रम्-धातोः लुङ्लकारे प्रथमपुरुषैकवचने व्यरंसीत् इति रूपम्।

१८. दुर्जनः असुखमुत्पादयति।

१९. सीतापहरणं स्वर्णमृगच्छलेन राक्षसेन कृतम्।

२०. रामचरितैः ग्रावा अपि रोदिति वज्रस्य हृदयं च भिन्नं भवति।

॥ इति पञ्चदशः पाठः ॥

# कादम्बर्यां शुकनासोपदेशः

## भूमिका

कविकर्म भवति काव्यम्। तच्च काव्यं जनानां श्रोत्रेषु सुधाधारां प्रवाहयति, वर्णनीयेन सह ऐकात्म्यम् अनुभवतां सहृदयानां मनसि कमपि आनन्दोल्लासं जनयति। काव्यं कान्तासम्मितोपदेशप्रदानेन सर्वेषां जनानां मनस आह्लादकं भवति। तत् काव्यं ध्वनिकाव्यं गुणीभूतकाव्यं चेति द्विविधं भवति। तच्च पुनः दृश्यश्रव्यभेदेन द्विविधं भवति। तत्र दृश्यं नाम दर्शनयोग्यं नाटकादिकं श्रव्यं च महाकाव्यादिकम्। श्रव्यकाव्यं पुनः गद्यपद्यभेदेन द्विविधम्। तत्र छन्दोबद्धमयं पद्यम्, वृत्तबन्धोज्झितं च गद्यम्।

पद्यकाव्यस्यैव उद्भवः इति केषाञ्चिद् विदुषां मतम्। गद्यकाव्यस्य परमुत्पत्तिः भवतु किन्तु गद्यकाव्यसंरचने दार्ढ्यम् अत्यावश्यकम्। तस्मात् प्रसिद्धा इयं - "गद्यं कवीनां निकषं वदन्ति" इति। गद्यकाव्यस्यापि आख्यायिका कथा इति भेदद्वयम्। तयोः लक्षणं तावत् - ‘‘कथा कल्पितवृत्तान्ता सत्यमाख्यायिका स्मृता’’ इति।

गद्यकाव्यनिर्माणपरम्परायां बाणभट्ट एव प्रधानाचार्य इत्यत्र नास्ति संशयः। तद्विरचितं कादम्बरी इति गद्यकाव्यं गद्यकाव्येषु महत् स्थानं बिभर्ति। कवेः वर्णनसौन्दर्यम् अनुपमम् अत्र। अत्र सर्वत्रैव अलङ्काराणां मधुरझङ्काराः सहृदयानां मनसि परमोल्लासं जनयन्ति हृदयं च विकासयन्ति। कादम्बरी नाम मदिरा। रससमास्वादकानां सहृदयानां आनन्दोल्लासविधायिनी सुमधुरा कादम्बरी मदिरा एव। अतः सार्थकम् अस्य ग्रन्थस्य अभिधानम्। अत एव बाणभट्टपुत्रस्य पुलिनभट्टस्योक्तिः- ‘‘कादम्बरीरसभरेण समस्त एव मत्तो न किञ्चिदपि चेतयते जनोऽयम्’’ इति। एतस्य ग्रन्थस्य पूर्वभागं निर्माय कविः बाणभट्टः दिवं गतः। तदा तत्पुत्रः पुलिनभट्टः एतस्य उत्तरभागं रचयामास।

कादम्बरी इत्याख्यं गद्यकाव्यं कथा आख्यायिका वा इति विषये विदग्धानां वैमत्यम् अस्ति। तन्मध्ये बहूनां विदुषां मतानुसारेण काव्यमिदं कथा इति।

कादम्बर्याः कथाभागस्य एकः अंशः शुकनासोपदेशः अत्र प्रतिपाद्यमानविषयः। शुकनासोपदेशः इति भागात्पूर्वं काव्यस्यास्य कथाप्रवाहः संक्षेपेण तावद् एवम् - विदिशानगर्य्याः राज्ञे शूद्रकाय एका चण्डालकन्या विशिष्टम् एकं शुकपक्षिणम् आनीय अयच्छत्। तस्य पक्षिणः वाक्कौशलेन विस्मितः राजा तस्मै पक्षिणे तस्य परिचयादिकम् अपृच्छत्। सः पक्षी अपि राज्ञे तस्य सर्वं जन्मादिवृत्तान्तम् अकथयत्। ततः स राज्ञे निवेदितवान् यत् कस्यचित् व्याधस्य आक्रमेण तस्य पिता हतः स च आहतः सन् भूमौ पतितः। तदनन्तरं महर्षेः जवालस्य पुत्रेण सः दृष्टः स्वाश्रमम् आनीय सेवितश्च। ततः महर्षिजावालिः तं विहगं दृष्ट्वा 'एष स्वदुष्कर्मणः फलभोगं करोति' इत्युक्तवान्। तदा तत्र उपस्थिता मुनिबालकाः समुत्सुकाः सन्तः महर्षिजाबालिं पक्षिणः विषये पृष्टवन्तः। तदा मुनिजावालिः पक्षिणः जन्मादिवृत्तान्तं वक्तुमारभत यत् - अवन्तीनगर्य्याम् उज्जयिनीनामकः एकः प्रदेशः आसीत्। तत्र विद्यमानस्य राज्ञः तारापीडस्य विलासवतीनामिका भार्या शुकनासनामकः अमात्यश्चासीत्। शुकनासस्य भार्याया मनोरमायाः किञ्च राज्याः विलासवत्याश्च सन्तानः नासीत्। सन्तानलाभाय राज्ञी विलासवती मनोरमा च व्रतम् आचरितवत्यौ। ततः राज्याः विलासवत्याः शुकनासपत्न्याः मनोरमायाश्च पुत्रौ संवृत्तौ। राज्याः पुत्रस्य नाम चन्द्रापीड इति मनोरमायाः च वैशम्पायन इति। ततः अध्ययनाय चन्द्रापीडः मित्रेण वैशम्पायनेन सह गुरुगृहं गतः। तत्र स शस्त्रविद्यां शास्त्रविद्यां च अलभत। अध्ययनाद् अनन्तरं गुरुगृहाद् आगतस्य राजकुमारस्य चन्द्रापीडस्य यौवराज्याभिषेकसमयः आगतः। तदा अमात्यः शुकनासः कथं राजकार्यादिकं परिचालनीयम् इत्यस्मिन् विषये सारगर्भम् उपदेशं दत्तवान्। स एव उपदेशः कादम्बर्याः शुकनासोपदेशः इति नाम्ना प्रसिद्धः। स हि शुकनासोपदेशः 'एवं समतिक्रामत्सु' इत्यतः आरभ्य 'इत्येतावदभिधायोपशशाम' इति पर्यन्तम्।

# १६

# शुकनासोपदेशः - यौवनस्वभावः

## प्रस्तावना

अस्मिन् पाठे शुकनासोपदेशस्य 'एवं समतिक्रामत्सु' इत्यतः आरभ्य 'तन्द्राप्रदा लक्ष्मीः' इत्यन्तः अंशः वर्ण्यते। अत्र शुकनासः चन्द्रापीडम् उपदेष्टुमारभते। स यौवनस्य विकारः, सम्पदः अहङ्कारः इत्यादीन् बहून् विषयान् चन्द्रापीडं प्रति उपदिशति। स भागः अत्राध आलोच्यते -

## उद्देश्यानि

अमुम् पाठं पठित्वा भवान् -

- बाणभट्टस्य गद्यकाव्यरचनाशैलीं जानीयात्।
- चन्द्रापीडराज्याभिषेकवृत्तान्तं जानीयात्।
- यौवनस्य प्रभावं लक्ष्मीमदम् अनर्थपरम्परां च जानीयात्।
- सज्जनस्य दुर्जनस्य च व्यवहारं जानीयात्।
- अत्र पाठे स्थितानां पदानाम् अन्वयार्थं जानीयात्।
- दीर्घाणां पदानां समासान् बोद्धुं समर्थः भवेत्।

## १६.१) साम्प्रतं मूलपाठम् अवगच्छाम – १

**एवं समतिक्रामत्सु दिवसेषु राजा चन्द्रापीडस्य यौवराज्याभिषेकं चिकीर्षुः प्रतीहारानुपकरणसम्भारसङ्ग्रहार्थमादिदेश। समुपस्थितयौवराज्याभिषेकञ्च तं कदाचिद्दर्शनार्थमागतमारूढविनयमपि विनीततरमिच्छन् कर्तुं शुकनासः सविस्तरमुवाच।**

**व्याख्यानम् -**

एवं पूर्वोक्तविधिना पूर्वोक्तविधया दिवसेषु दिनेषु समतिक्रामत्सु समतिक्रान्तेषु गच्छत्सु व्यतीतेषु राजा नृपः तारापीडः चन्द्रापीडस्य आत्मजस्य स्वपुत्रस्य यौवराज्याभिषेकं यौवराज्ये युवराजकर्मणि अभिषेकम् अभिषेचनं युवराजपदप्रतिष्ठां वा चिकीर्षुः कर्तुमिच्छुः प्रतीहारान् द्वारपालान् उपकरणसंभारसंग्रहार्थम् उपकरणम् अभिषेकसामग्री तस्य यः सम्भारः समूहः तस्य संग्रहार्थं सञ्चयार्थम् आदिदेश आज्ञापयामास आज्ञां दत्तवान्।

समुपस्थितयौवराज्याभिषेकं समुपस्थितः सम्प्राप्तः विद्यमानः यौवराज्याभिषेकः यौवराज्यस्य युवराजकर्मणः अभिषेकः अभिषेचनं युवराजपदप्रतिष्ठा यस्य तादृशं तं चन्द्रापीडं कदाचित् जातुचित् कस्मिंश्चित् समये दर्शनार्थम् अवलोकनार्थम् आगतम् आयातम् आरूढविनयं सञ्जातविनयम् अपि विनीततरम् अतिशयेन विनयिनम् इच्छन् वाञ्छन् अभिलषन् शुकनासः प्रधानामात्यः सविस्तरं सव्यासम् उवाच जगाद।

## सरलार्थः -

इत्थं समुचिते काले समागते राजा तारापीडः स्वपुत्रस्य चन्द्रापीडस्य युवराजपदप्रतिष्ठां कर्तुम् इष्टवान्। अतः अभिषेकस्य सामग्रीसंग्रहणाय सेवकान् स आदिष्टवान्। यौवराज्याभिषेककात्पूर्वं शुकनासं द्रष्टुम् चन्द्रापीडः गतवान्। तदा शुकनासः चन्द्रापीडः अतीव विनयसम्पन्नः इति दृष्ट्वा इतोऽपि तस्य विनयवर्धनाय विस्तरेण उक्तवान्।

### व्याकरणविमर्शः -

**क) समासः**

१. यौवराज्याभिषेकम्- यौवराज्यस्य अभिषेकः यौवराज्याभिषेकः, तम् इति षष्ठीतत्पुरुषसमासः।

२. समुपस्थितयौवराज्याभिषेकम् - यौवराज्यस्य अभिषेकः यौवराज्याभिषेकः इति षष्ठीतत्पुरुषसमासः। समुपस्थितः यौवराज्याभिषेकः यस्य स समुपस्थितयौवराज्याभिषेकः, तं समुपस्थितयौवराज्याभिषेकम् इति बहुव्रीहिसमासः।

३. आरूढविनयम् - आरूढः विनयः यम् स आरूढविनयः, तमिति बहुव्रीहिसमासः।

**ख) सन्धिविच्छेदः**

समुपस्थितयौवराज्याभिषेकञ्च - समुपस्थितयौवराज्याभिषेकम् च।

### कोशः -

१. "राजा राट् पार्थिवक्ष्माभृन्नृपभूपमहीक्षितः।" इत्यमरवचनात् राजन्-शब्दस्य राट्, पार्थिवः, क्ष्माभृत्, नृपः, भूपः, महीक्षित् इत्येते पर्यायाः।

२. "प्रतीहारो द्वारपालद्वास्थद्वास्थितदर्शकाः।" इत्यमरवचनात् प्रतीहारशब्दस्य द्वारपालः, द्वास्थः, द्वास्थितः, दर्शकः इत्येते पर्यायाः। को नाम प्रतीहार इति चाणक्यसंग्रहे -

"इङ्गिताकारतत्त्वज्ञो बलवान् प्रियदर्शनः।

अप्रमादी सदा दक्षः प्रतीहारः स उच्यते।।" इति।

## पाठगतप्रश्नाः- १

१. चन्द्रापीडः कस्य पुत्रः?

२. कः कस्य यौवराज्याभिषेकं चिकीर्षुः आसीत्?

३. राजा उपकरणसंग्रहार्थं कान् आदिष्टवान्?

४. चन्द्रापीडः कदा आगतवान्?

५. तारापीडस्य प्रधानमन्त्रिणः नाम किमासीत्?

६. शुकनासः किमर्थम् उपदेशं दत्तवान्?

७. कादम्बरी कथा उत आख्यायिका?

## १६.२) साम्प्रतं मूलपाठम् अवगच्छाम – २

**"तात, चन्द्रापीड, विदितवेदितव्यस्य अधीतसर्वशास्त्रस्य ते नाल्पमप्युपदेष्टव्यमस्ति। केवलञ्च निसर्गत एव अभानुभेद्यमरत्नालोकोच्छेद्यम् अप्रदीपप्रभापनेयमतिगहनं तमो यौवनप्रभवम्। अपरिणमोपशमो दारुणो लक्ष्मीमदः।कष्टमनञ्जनवर्त्तिसाध्यमपरम् ऐश्वर्यतिमिरान्धत्वम्। अशिशिरोपचारहार्योऽतितीव्रो दर्पदाहज्वरोष्मा। सततममूलमन्त्रगम्यो विषमो विषयविषास्वादमोहः। नित्यमस्नानशौचवध्यो बलवान् रागमलावलेपः। अजस्रमक्षपावसानप्रबोधा घोरा च राज्यसुखसन्निपातनिद्रा भवतीति, इत्यतः विस्तरेणाभिधीयसे।**

**व्याख्यानम् -**

तात वत्स! पुत्र! चन्द्रापीड! विदितवेदितव्यस्य विदितं ज्ञातं वेदितव्यं ज्ञातव्यं समस्तो ज्ञातव्यविषयो येन तस्य तादृशस्य, अधीतसर्वशास्त्रस्य अधीतानि पठितानि सर्वशास्त्राणि वेदादिसकलशास्त्राणि येन तस्य तादृशस्य, ते तव, अल्पं स्तोकम् अपि उपदेष्टव्यम् उपदेष्टुं योग्यं वक्तव्यं शास्त्रतत्त्वमिति शेषः न अस्ति नो विद्यते।

तर्हि उपदेशस्य आरम्भः किमर्थः इति प्रश्न उदेति। तदा कथयति - केवलञ्च इति। केवलञ्च किञ्च उपदेष्टव्यत्वाभावेऽपि उपदेशप्रयोजनमुपपादयति निसर्गतः स्वभावतः एव यौवनप्रभवं यौवनं प्रभवः यस्य तत् यौवनप्रभवं तारुण्योत्पन्नं, तमः अन्धकारम् अतिदुर्दमनीयम्, अभानुभेद्यम् न भानुना सूर्येण भेद्यम् उच्छेद्यम्, अरत्नालोकच्छेद्यं न रत्नानां मणीनाम् आलोकेन प्रकाशेन कान्त्या उच्छेद्यम् उच्छेत्तुं योग्यं छेद्यं विनाशयितुं शक्यम्, अप्रदीपप्रभापनेयं प्रदीपप्रभया प्रदीपप्रकाशेन अपि न अपनेयम् अपनेतुम् अशक्यम् इति भावः। अत एव - अतिगहनं दुःखहेतुत्वाद् अतिशयदुःखस्वरूपमिति भावः।

लक्ष्मीमदः लक्ष्म्याः धनसम्पदः मदः उन्मत्तता धनमत्तता, अपरिणामोपशमः अविद्यमानः परिणामे वयःपरिणतौ अन्तिमावस्थायाम् उपशमः निवृत्तिः यस्य सः तादृशः। अर्थात् मादकपदार्थसेवनजनिता मत्तता तु औषधादिना कालपरिणतौ च निवर्तते परं लक्ष्मीमदः कथमपि न निवर्तत इति भावः। तथा च तारुण्यमदस्य वयःपरिणामेऽपगमो भवति, सुरापानोत्पन्नमदश्च चान्यसमये स्वयमेव निवर्तते। किन्तु धनसम्पत्तिमदः जीवनान्तं यावत् तिष्ठति अत इतरमदापेक्षया अयं भिन्नः अपरिणामोपशमः। अत एव दारुणः भीषणः।

कष्टमनञ्जनवर्त्तिसाध्यमपरम् ऐश्वर्यतिमिरान्धत्वम्। अपरं प्रसिद्धात् अन्धत्वरोगाद् भिन्नम्, ऐश्वर्यतिमिरान्धत्वम् ऐश्वर्यं सम्पद् एव तिमिरं तिमिरसंज्ञकः नयनरोगः ऐश्वर्यतिमिरः, तेन अन्धत्वं दर्शनराहित्यम् दर्शनशून्यत्वम् इति भावः। अनञ्जनवर्तिसाध्यं न अञ्जनवर्त्या चन्द्रोदयाद्यञ्जनवर्त्या विडालादिवसाकज्जलदशया, नेत्रौषधोविशेषेण साध्यं निवारणीयं विद्यते। अतः कष्टं दुःखस्वरूपम्। तिमिराख्यनयनरोगस्तु अञ्जनवर्त्या उपशाम्यति। अत एव कष्टं नितान्तक्लेशकरं भवति। तिमिरव्याधिना उत्पन्नं दृष्टिराहित्यम् अञ्जनवर्त्यादिना प्रतिकर्तुं योग्यं, किन्तु सदसद्विवेकशून्यत्वरूपधनसम्पत्तितिमिरान्धत्वं केनापि प्रकारेण प्रतिकर्तुं न योग्यमिति द्वयोः महद् वैषम्यम् अस्ति इत्याशायः। यथाष्टाङ्गहृदये -

"रसेन्द्रभुजगौ तुल्यौ तयोस्तुल्यमथाञ्जनम्।

ईषत्कर्पूरसंयुक्तमञ्जनं तिमिरापहम्।।" इति।

दर्पदारज्वरोष्मा दर्पः सम्पत्त्यहंकारः अभिमान एव दाहज्वरः तीव्रतापः तस्य ऊष्मा उष्णत्वम् अशिशिरोपचारहार्यः न शिशिरैः शीतलैः उपचारैः स्रक्चन्दनादिभिः पदार्थैः व्यापारैः वा हार्यः परिहर्तुं योग्य इति तादृशः। अत एव अतितीव्र अतितीक्ष्णः। अन्यविधः ज्वरस्तु शीतलोपचारैः निवारणयोग्यो भवति परन्तु दर्पदाहज्वरोष्मा न तथेति तात्पर्यम्।

विसिन्वति बध्नाति विषयिणमनुबध्नतीति विषयाः स्रक्चन्दनवनितादयः पदार्थाः। ते एव अनर्थहेतुत्वाद् विषाणि गरलानि, तेषां य आस्वादः सम्भोगः उपभोगः तेन यः मोहः मूर्च्छा स विषयविषास्वादमोहः स्रक्चन्दनादिगरलसम्भोगमूर्च्छा सततं निरन्तरम् अमूलमन्त्रगम्यः न मूलैः औषधमूलैः मन्त्रैः विषविनाशकमन्त्रैः गम्यः साध्यः निवर्तयितुं शक्य इति सः तादृशः विषमः अतीव तीव्रः कठिनः निवारयितुम् अशक्यः।

रागमलावलेपः रागः विषयस्याभिलाषः, स एव मलः पङ्कः, तस्य अवलेपः अवलेपनम् अस्नानशौचवध्यः न स्नानेन मज्जनेन शौचेन शुचिक्रियया च वध्यः विनाश्यः, परिहार्य इति भावः। स नित्यं बलवान् नितान्तः शक्तिशाली। अन्यः अवलेपः स्नानादिना अपनेतुं शक्यते, अयं रागमलावलेपः स्नानादिना न अपनेतुं शक्यः।

अजस्रमक्षपावसानप्रबोधा घोरा च राज्यसुखसन्निपातनिद्रा भवतीति, इत्यतः विस्तरेणाभिधीयसे। राज्यसुखसन्निपातनिद्रा राज्यसुखं राष्ट्रशासनस्य आनन्दः एव संनिपातनिद्रा सुषुप्तिरूपा। अक्षपावसानप्रबोधा न क्षपाऽवसाने रात्र्यन्ते प्रबोधः जागरणं यस्यां सा तादृशी। अन्यस्या निद्रायाः निशान्ते जागरणं भवति परन्तु राज्यसुखसंनिपातनिद्रायास्तु प्रबोधो न भवति। अत इयं निद्रा अजस्रं निरन्तरं घोरा भीषणा भवति। इति एवं विस्तरेण व्यासरूपेण अभिधीयसे कथ्यसे। त्वयि सम्भाव्यमानानां तारुण्योत्पन्नाज्ञानादीनां निवृत्त्यर्थमिति योज्यम्।

**सरलार्थः -**

शुकनासः चन्द्रापीडं प्रति कथयति यत् सर्वाणि शास्त्राणि चन्द्रापीडः अधीतवनान्, अतः तस्मै उपदेष्टव्यं किमपि नास्ति। परन्तु यौवनदशायां स्वभावतः एव यत् तमः उत्पद्यते, तत् सूर्येण न विनाशयितुं शक्यते। मणेः आलोकः अपि तत् न उच्छेत्तुं समर्थः। प्रदीपप्रभापि तत् न दूरीकर्तुं समर्था। एतत् तमः अतिगहनम् अतिशयदुःखस्वरूपम्। धनसम्पत्तिमदः हि उपशमनयोग्यो नास्ति। मादकपदार्थसेवनजनिता मत्तता तु औषधादिना कालपरिणतौ च निवर्तते परं लक्ष्मीमदः कथमपि न निवर्तत। ऐश्वर्येण यद् अन्धत्वम् आयाति तस्य निवारणं सुदुष्करम्। धनस्य अभिमानाद् जाता या उष्णता तस्या उपशमः चन्दनलेपनादिभिः न भवति। सा हि उष्णता अस्ति अतितीव्रा। स्रक्चन्दनवनितादिभिः विषयसम्भोगैः यो मोहः उत्पद्यते, तस्यापि मोहस्य केनापि औषधमूल्येण विनाशकमन्त्रेण वा न उपशमः भवति। तस्मात् स मोहः अपि भयङ्करः। विषयासक्तिरूपमलस्य अवलेपः गुरुतरः स शुचिक्रियया अपि दूरीकर्तुं न शक्यते। किञ्च राज्यसुखस्य यः अनुभवः सा महती निद्रा। अन्या निद्रा रात्र्यवसाने अपगता भवति, किन्तु सा निद्रा न सारल्येन अपगच्छति। एवम्प्रकारेण राज्यसुखस्य लक्ष्मीमदस्य यौवनमदस्य च वर्णनं शुकनासेन कृतम्। यथा एतेषु दोषेषु चन्द्रापीडस्य रुचिर्न स्याद् अतः शुकनासः विस्तरेण एतेषां विषये वर्णयन्नस्ति।

**व्याकरणविमर्शः -**

**क) समासः -**

१. विदितवेदितव्यस्य – विदितं वेदितव्यं येन स इति बहुव्रीहिसमासः, तस्य विदितवेदितव्यस्य।

२. अधीतसर्वशास्त्रस्य – अधीतानि सर्वशास्त्राणि येन स इति बहुव्रीहिसमासः, तस्य अधीतसर्वशास्त्रस्य।

३. अभानुभेद्यम् - भानुना भेद्यं भानुभेद्यम् इति तृतीयातत्पुरुषः। न भानुभेद्यम् अभानुभेद्यम् इति नञ्तत्पुरुषसमासः।

४. अरत्नालोकोच्छेद्यम् - रत्नानाम् आलोकः रत्नालोकः इति षष्ठीतत्पुरुषसमासः। रत्नालोकेन उच्छेद्यं रत्नालोकोच्छेद्यम् इति तृतीयातत्पुरुषसमासः। न रत्नालोकोच्छेद्यम् अरत्नालोकोच्छेद्यम् इति नञ्तत्पुरुषसमासः

५. अप्रदीपप्रभापनेयम् - प्रदीपस्य प्रभा प्रदीपप्रभा इति षष्ठीतत्पुरुषः। प्रदीपप्रभया अपनेयं प्रदीपप्रभापनेयम् इति तृतीयातत्पुरुषः। न प्रदीपप्रभापनेयम् अप्रदीपप्रभापनेयम् इति नञ्तत्पुरुषः।

६. अक्षपावसानप्रबोधा - क्षपायाः अवसानं क्षपावसानम् इति षष्ठीतत्पुरुषः। नास्ति क्षपावसाने प्रबोधः यस्यां सा अक्षपावसानप्रबोधा इति बहुव्रीहिसमासः।

**ख) सन्धिविच्छेदः -**

१. नाल्पमप्युपदेष्टव्यम् - न अल्पमपि उपदेष्टव्यम्।

२. एवाभानुभेद्यम्- एव अभानुभेद्यम्।

३. अशिशिरोपचारहार्योऽतितीव्रः - अशिशिरोपचारहार्यः अतितीव्रः।

### अलङ्कारविमर्शः

१. तात इत्यादिवाक्ये काव्यलिङ्गम् अलङ्कारः। अत्र उपदेष्टव्यत्वाभावं प्रति विदितवेदितव्यस्य अधीतसर्वशास्त्रस्य इति पदद्वयस्य अर्थस्य हेतोः वर्णनात् काव्यलिङ्गम्। तथाहि तल्लक्षणं दर्पणे - "हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यते" इति।

२. केवलञ्च इत्यादिवाक्ये अतिशयोक्तिः, समुच्चयः, काव्यलिङ्गम् इत्यलङ्कारत्रयस्य अङ्गाङ्गिभावेन सत्त्वात्सङ्करालङ्कारः। तल्लक्षणं दर्पणे-

"अङ्गाङ्गित्वेऽलङ्कृतीनां तद्वदेकाश्रयस्थितौ।

सन्दिग्धत्वे च भवति सङ्करस्त्रिविधः पुनः।।" इति।

**कोशः**

१. "तातशब्दं प्रयुञ्जन्ति पूज्ये पितरि चात्मजे।" इति नारदवचनात् तातशब्दस्य पूज्यार्थे जनकार्थे पुत्रार्थे च प्रयोगो भवति।

२. "गहनं वनदुःखयोः। गह्वरं कलिले चाऽपि" इति विश्वकोषात् गहनशब्दस्य वनार्थे दुःखार्थे च प्रयोगो भवति।

## पाठगतप्रश्नाः- २

८. किमर्थं चन्द्रापीडः उपदेष्टव्यः नास्ति?

९. यौवनदशायाम् उत्पन्नं तमः कीदृशम् अस्ति?

१०. धनेन उत्पन्नः नेत्ररोगः कीदृशः?

११. धनस्य अभिमानरूपात् जाता उष्णता कीदृशी?

१२. स्रगादीनां विषयसम्भोगजातः मोहः कीदृशः?

१३. अरत्नालोकोच्छेद्यम् इत्यस्य विग्रहवाक्यं समासनाम च लिखत।

१४. नाल्पमप्युपदेष्टव्यम् इत्यस्य सन्धिविच्छेदः कार्यः।

## १६.३) साम्प्रतं मूलपाठम् अवगच्छाम - ३

**गर्भेश्वरत्वमभिनवयौवनत्वमप्रतिमरूपत्वममानुषशक्तित्वञ्चेति महतीयं खलु अनर्थपरम्परा सर्वा। अविनयानामेकैकम् अप्येषामायतनम्, किमुत समवायः। यौवनारम्भे च प्रायः शास्त्रजलप्रक्षालननिर्म्मलापि कालुष्यमुपयाति बुद्धिः। अनुज्झितधवलतापि सरागैव भवति यूनां दृष्टिः। अपहरति च वात्येव शुष्कपत्रम् समुद्भूतरजोभ्रान्तिरतिदूरम् आत्मेच्छया यौवनसमये पुरुषं प्रकृतिः। इन्द्रियहरिणहारिणी च सततमतिदुरन्तेयम् उपभोगमृगतृष्णिका**

**नवयौवनकषायितात्मनश्च सलिलानीव तान्येव विषयस्वरूपाण्यास्वाद्यमानानि मधुरतराण्यापतन्ति मनसः। नाशयति च दिङ्मोह इवोन्मार्गप्रवर्त्तकः पुरुषमत्यासङ्गो विषयेषु।**

**व्याख्यानम् -**

गर्भेश्वरत्वं गर्भाद् शैशवाद् आरभ्य ईश्वरत्वं धनशालित्वं प्रभुत्वम्, अभिनवयौवनत्वम् अभिनवं नूतनं यौवनं तारुण्यं यस्य स अभिनवयौवनः नूतनतरुणः तस्य भावः नूतनतारुण्यम्, अप्रतिमरूपत्वं अप्रतिमं निरुपमं रूपं सौन्दर्यः यस्य सः अप्रतिमरूपः निरुपमसौन्दर्यः तस्य भावः निरुपमसौन्दर्यत्वम् , अमानुषशक्तिम् अमानुषी अमानवी शक्तिः अलौकिकशक्तिः वा शारीरिकसामर्थ्यं यस्य तस्य भावः अमानुषशक्तित्वम् अमानवसामर्थ्यम् अलौकिकशक्तिसम्पन्नत्वमिति भावः। इयं वर्ण्यमाना महती दुरपनेयत्वाद् गरीयसी अनर्थपरम्परा अनिष्टपरम्परा सर्वा समस्ता। यथोक्तं विष्णुशर्मारचिते हितोपदेशे-

"यौवनं धनसम्पत्तिः प्रभुत्वमविवेकिता।

एकैकमप्यनर्थाय किमु यत्र चतुष्टयम्।।" इति।

एषां सम्प्रति वर्णितानां गर्भेश्वरत्वादीनां मध्ये एकैकम् अपि प्रत्येकम् अपि अविनयानां दुश्चेष्टानाम् आयतनं स्थानम्, समवायः एषां समूहः अस्ति चेत् किमुत किं वक्तव्यम्।

योवनारम्भे तारुण्यारम्भे शास्त्रजलप्रक्षालननिर्म्मला शास्त्रम् आन्वीक्षिक्यादिविद्या एव जलं सलिलं तेन प्रक्षालनं धावनं शास्त्रजलप्रक्षालनम् आन्वीक्षिक्यादिविद्यासलिलधावनं, तेन निर्मला स्वच्छा अपि बुद्धिः मतिः प्रायः बहुशः कालुष्यम् कलुषभावम् उपयाति प्राप्नोति।

अनुज्झितधवलता अनुज्झिता अत्यक्ता धवलता शुक्लता यया सा तादृशी अपि यूनां तरुणानां दृष्टिः दृक् अवलोकनं सरागा रागेण सहिता सौन्दर्यादौ अनुरागसहिता एव भवति।

यौवनसमये तारुण्यकाले समुद्भूतरजोभ्रान्तिः समुद्भूता समुत्पन्ना रजसा रजोगुणेन भ्रान्तिः भ्रमणं यस्यां तादृशी समुद्भूतरजोभ्रान्तिः वात्या बालकलिका इव प्रकृतिः स्वभावः आत्मेच्छया स्वेच्छया पुरुषं मनुष्यम् अतिदूरम् अतिशयविप्रकृष्टं अपहरति नयति।

इन्द्रियाणि हृषीकाणि एव हरिणाः मृगाः तान् हरति आकर्षति इति इन्द्रियहरिणहारिणी इयं सन्निकृष्टस्था, उपभोगमृगतृष्णिका उपभोगः रमण्यादिभोगाभिलाषा सा एव मृगतृष्णिका मरीचिका, सततम् सर्वदा अतिदुरन्ता अत्यन्तदुष्परिणामा च। हरिणानां रविकिरणोत्तप्तवालुकासु जलबुद्ध्या धावनेन इव पुरुषाणामपि विषयोपभोगतृष्णया दुष्परिणामो भवतीति भावः। नवयौवनकषायितात्मनः नवयौवनेन नूतनतारुण्येन कषायितः विकृतः आत्मा स्वरूपं यस्य तस्य तादृशस्य मनसः चित्तस्य तानि एव पूर्वमनुभूतानि एव विषयस्वरूपाणि शब्दस्पर्शादिभोग्यरूपाणि वस्तूनि, सलिलानि इव हरीतक्यादिकषायद्रव्येण जलानि इव आस्वाद्यमानानि उपभुज्यमानानि, मधुरतराणि अतिशयेन स्वादूनि आपतन्ति समुत्पद्यन्ते।

मधुरतराणि मनसः आपतन्ति चेत् कः क्लेशः इति वर्णयति - नाशयति इति। च दिङ्मोह इवोन्मार्गप्रवर्त्तकः पुरुषमत्यासङ्गो विषयेषु। दिङ्मोहः दिग्विषयकम् अज्ञानम् इव उन्मार्गप्रवर्तकः मार्गाद्

उत्क्रान्तः उन्मार्गः कुमार्गः इत्यर्थः, तस्य प्रवर्तकः कुमार्गपरिचालकः विषयेषु भोग्यवस्तुषु अत्यासङ्गः अत्यन्तासक्तिः पुरुषम् आत्मानं नाशयति अधः पातयति।

## सरलार्थः -

गर्भवासकालात् प्रभुत्वं, नूतनयौवनं, निरुपमरूपत्वम् अमानुषिकशक्तिः च अनिष्टस्य महत् मूलम्। एतेषाम् एकैकमपि अविनयस्य निवासस्थानं, समवायस्य का कथा? यौवनस्य आरम्भे बुद्धिः शास्त्ररूपेण जलेन प्रक्षालिता भूत्वा अपि कालुष्यं प्राप्नोति। युवकानां दृष्टिः रागान्विता भवति। यौवनकाले रजोगुणकारणात् नराणां स्वभावे भ्रमाः उत्पद्यन्ते। कुमार्गेषु प्रवर्तिका भवति विषयेषु अत्यासक्तिः। इन्द्रियरूपं मृगं सर्वदा हृत्वा दूरं नयति। नवयौवनवशात् धनस्त्र्यादीनां भोग्यवस्तूनाम् आस्वादनं मधुरं मन्यते। धनस्त्र्यादौ आसक्तिः अपि मनुष्यान् कुमार्गे चालयित्वा विनाशयति। एतत्सर्वं हेयम् इति शुकनासस्य तात्पर्यम्।

**व्याकरणविमर्शः -**

**क) समासः -**

१. शास्त्रजलप्रक्षालननिर्म्मला - शास्त्रमेव जलं शास्त्रजलम् इति कर्मधारयसमासः। तेन प्रक्षालनं शास्त्रजलप्रक्षालनमिति तृतीया-तत्पुरुषसमासः। शास्त्रजलप्रक्षालनेन निर्म्मला शास्त्रजलप्रक्षालन-निर्म्मला इति तृतीयातत्पुरुषसमासः।

२. अनुज्झितधवलता - न उज्झिता अनुज्झिता इति नञ्तत्पुरुषः। अनुज्झिता धवलता यया सा अनुज्झितधवलता इति तृतीयातत्पुरुषसमासः।

३. नवयौवनकषायितात्मनः – नवयौवनेन कषायितः नवयौवनकषायितः इति तृतीयातत्पुरुषसमासः। नवयौवनकषायितः आत्मा यस्य सः नवयौवनकषायितात्मा इति बहुव्रीहिसमासः, तस्य नवयौवनकषायितात्मनः।

**ख) सन्धिविच्छेदः**

१. अमानुषशक्तित्वञ्च – अमानुषशक्तित्वम् च।

२. खल्वनर्थपरम्परा– खलु अन्वर्थपरम्परा।

३. एकैकमप्येषाम् – एकैकम् अपि एषाम्।

**अलङ्कारविमर्शः**

१. गर्भेश्वरत्वमित्यादिवाक्ये गर्भेश्वरत्वादिभिः हेतुभिः सह हेतुमतः कार्यस्य विपत्तेः अभेदेन वर्णनाद् हेत्वलङ्कारः। तल्लक्षणं दर्पणे - “अभेदेनाभिधा हेतुर्हेतोर्हेतुमता सह।” इति।

२. शास्त्रजलप्रक्षालननिर्म्मला अपि कालुष्यमुपयाति इत्यत्र शास्त्रमेव जलमिति शास्त्रजलयोः साक्षाद् ऐकरूप्यकथनाद् रूपकम्। तल्लक्षणं दर्पणे - “रूपकं रूपितारोपाद्विषये निरपह्नवे” इति। अत्र शास्त्रजलप्रक्षालननिर्मलत्वे अपि कालुष्यप्राप्तिः विरुद्धमिव प्रतीयते, अतः विरोधालङ्कारः।

तल्लक्षणं "विरुद्धमिव भासेत विरोधः" इति। रूपकविरोधालङ्कारयोः अङ्गाङ्गिभावेन सत्त्वात् सङ्करालङ्कारः।

३. नवयौवनकषायितात्मनश्च सलिलानीव तान्येव विषयस्वरूपाणि इत्यत्र उपमेयेन विषयस्वरूपाणि इत्यनेन उपमानस्य सलिलानि इत्यस्य अवैधर्म्यस्य साम्यस्य कथनाद् उपमालङ्कारः। तल्लक्षणं दर्पणे "साम्यं वाच्यमवैधर्म्यं वाक्यैक्य उपमा द्वयोः" इति।

**कोशः**

१. "स्वादुप्रियौ च मधुरौ" इत्यमरवचनात् स्वाद्वर्थकः मधुरशब्दः।

२. "आपः स्त्री भूम्नि वार्वारि सलिलं कमलं जलम्।" इत्याद्यमरवचनात् सलिलस्य आपः, वाः, वारि, कमलम्, जलम् इत्यादयः पर्यायशब्दाः।

## पाठगतप्रश्नाः- ३

१५. महती सर्वा अनर्थपरम्परा का ?

१६. केषु आसक्तिः मनुष्यान् कुमार्गे चालयित्वा नाशयति?

१७. अनुज्झितधवलता इत्यस्य विग्रहवाक्यं लिखित्वा समासानां नाम लिखत।

१८. खल्वनर्थपरम्परा इत्यस्य सन्धिविच्छेदं दर्शयत।

१९. रजसाम् इति पदस्य कः अर्थः का च विभक्तिः?

## १६.४) साम्प्रतं मूलपाठम् अवगच्छाम – ४

**भवादृशा एव भवन्ति भाजनान्युपदेशानाम्। अपगतमले हि मनसि स्फटिकमणाविव रजनिकरगभस्तयो विशन्ति सुखेनोपदेशगुणाः। गुरुवचनममलमपि सलिलमिव महदुपजनयति श्रवणस्थितं शूलमभव्यस्य। इतरस्य तु करिण इव शङ्खाभरणमाननशोभासमुदयमधिकतरमुपजनयति। हरति च अतिमलिनमन्धकारमिव दोषजातं प्रदोषसमयनिशाकर इव। गुरूपदेशः प्रशमहेतुर्वयःपरिणाम इव पलितरूपेण शिरसिजजालममलीकुर्वन् गुणरूपेण तदेव परिणमयति।**

**व्याख्यानम् -**

भवादृशाः भवत्सदृशाः एव उपदेशानां शिक्षाणां भाजनानि पात्राणि भवन्ति सन्ति, नान्ये।

हि यस्मात् कारणात् अपगतमले अपगतः निर्गतः मलः कालुष्यं यस्मात् तस्मिन् निर्गतकालुष्ये स्फटिकमणौ सूर्यकान्तरत्ने रजनिकरगभस्तयः रजनिकरस्य चन्द्रस्य इव अपगतमले निर्गतसंशयविपर्ययादिरूपमले मनसि चित्ते उपदेशगुणाः शिक्षाया फलानि सुखेन अनायासेन विशन्ति प्रविशन्ति।

गुरुवचनम् गुरोः हिताहितज्ञानप्रदातुः उपदेशवाक्यम् अमलं निर्मलं कल्याणकरम् अपि अभव्यस्य अशिष्टजनस्य श्रवणस्थितं कर्णस्थितं सलिलं जलम् इव महत् शूलं असह्यां व्यथाम् उपजनयति उत्पादयति।

इतरस्य अन्यस्य अभव्येतरस्य शिष्टजनस्य गुरुवचनं करिणः गजस्य शङ्खाभरणं कम्बूभूषणम् इव अधिकतरं प्रचुरतरम् आननशोभासमुदयं वदनसौन्दर्योत्पत्तिं मुखकान्त्युत्पत्तिम् उपजनयति उत्पादयति। कर्णस्थशङ्खालङ्कारेण यथा करिणो मुखशोभा तथैव गुरुवचसा साधोर्मुखशोभा, सश्रद्धं गुरुवचनाकर्णनेन तस्यानने हर्षोदयादिति तात्पर्यम्।

गुरुवचनमिति पदं पूर्ववाक्यादनुवर्तते। गुरुवाक्यं प्रदोषसमयनिशाकरः प्रदोषसमये रात्र्यारम्भकाले निशाकरः चन्द्रः अर्थात् सूर्यास्ताद् अनन्तरकालिकः चन्द्रः इव अतिमलिनम् अतिशयमलीमसम् अन्धकारं तिमिरं दोषजातं दूषणसमूहं हरति अपनयति। गुरूपदेशः प्रशमहेतुर्वयःपरिमाण इव पलितरूपेण शिरसिजजालममलीकुर्वन् गुणरूपेण तदेव परिणमयति।

प्रशमहेतुः प्रशमस्य कामादिविकारप्रशमनस्य हेतुः कारणीभूतः गुरूपदेशः आचार्योपदेशः, पलितरूपेण जरसा शौक्ल्यरूपेण शिरसिजजालं केशसमूहम् अमलीकुर्वन् निर्मलीकुर्वन् वयःपरिणाम इव अवस्थापरिणतिः इव तदेव दोषजातं कामक्रोधादिकं परिणमयति गुणरूपेण दयादाक्षिण्यादिगुणस्वरूपेण परिवर्तयति।

## सरलार्थः -

भवान् एव उपदेशग्रहणायार्हः। निर्मलस्फटिकमणौ यथा चन्द्रकिरणः साधु निविशति एवं भवतः अपि निर्मलचित्तसत्त्वात् भवान् उपदेशान् सम्यक्तया बोद्धुं शक्नुयात्। परन्तु सज्जनानां वचसि समेषां रुचिः न भवति। यथा जलं निर्मलं जीवनदं परन्तु तत् कर्णाभ्यन्तरे प्रविशति चेत् पीडां जनयति तथा इयम् अमृतवाणी दुर्जनानां कर्णपीडां जनयति। शङ्खावल्या यथा गजस्य मुखशोभा वर्धते एवमेव गुरुवचनात् सज्जनानां मुखशोभा वर्धते। रात्रेः प्रारम्भे चन्द्रकिरणेन यथा तमः अतितरां पलायते तद्वदेव गुरोः वचनेन कामक्रोधादिदोषसमूहः अपह्रियते। वृद्धावस्थायां केशाः शुक्लाः भवन्ति, तेन शुक्लतया केशाः स्वच्छाः सम्पादिताः इति यथा अनुमीयते एवं शान्तिहेतुकेन गुरूपदेशेन मनुष्यः निर्मलीभूय सद्गुणैः तथैव सम्पूर्णतया परिणतः भवतीति अवगम्यते।

## व्याकरणविमर्शः

**क) समासः -**

१. रजनिकरगभस्तयः - रजनिकरस्य गभस्तयः रजनिकरगभस्तयः इति षष्ठीतत्पुरुषसमासः।

२. शिरसिजजालम् – शिरसि जातं शिरसिजम् इति उपपदतत्पुरुष-समासः। शिरसिजस्य जालं शिरसिजजालमिति षष्ठीतत्पुरुषसमासः।

३. आननशोभासमुदयम् - आननस्य शोभा आननशोभा इति षष्ठीतत्पुरुषः। तस्याः समुदयः आनन्दशोभासमुदयः, तम् इति षष्ठीतत्पुरुषसमासः।

४. प्रदोषसमयनिशाकरः - प्रदोषसमये निशाकरः प्रदोषसमयनिशाकरः इति सप्तमीतत्पुरुषसमासः।

**ख) सन्धिविच्छेदः**

१. स्फटिकमणाविव – स्फटिकमणौ इव।

२. सुखेनोपदेशगुणाः– सुखेन उपदेशगुणाः।

३. हरत्यतिमलिनम् – हरति अतिमलिनम्।

४. प्रशमहेतुर्वयःपरिणाम इव – प्रशमहेतुः वयःपरिणामः इव।

## अलङ्कारविमर्शः

१. अपगतमले इत्यस्मिन् वाक्ये मनसि इत्युपमेयेन सह स्फटिकमणौ इत्युपमानस्य अवैधर्म्यस्य साम्यस्य कथनाद् उपमालङ्कारः।

२. गुरुवचनम् इत्यस्मिन् वाक्ये गुरुवचनम् इत्युपमेयेन सह सलिलम् इत्युपमानस्य अवैधर्म्यस्य साम्यस्य कथनाद् उपमालङ्कारः।

३. इतरस्य इत्यस्मिन् वाक्ये इतरस्य इत्युपमेयेन सह करिणः इत्युपमानस्य अवैधर्म्यस्य साम्यस्य कथनादुपमालङ्कारः।

४. एवमेव हरतीत्यस्मिन् गुरूपदेशेत्यस्मिन् च वाक्ये उपमालङ्कारः।

## कोशः

१. "किरणोस्रमयूखांशुगभस्तिघृणिरश्मयः।" इत्यमरवचनाद् किरणम्, उस्रः, मयूखः, अंशुः, गभस्तिः, घृणिः, रश्मिः इत्येते समार्थकाः।

२. "प्रदोषो रजनीमुखम्" इत्यमरवचनात् रजनीमुखम् इति प्रदोषसमार्थकः।

## पाठगतप्रश्नाः- ४

२०. कीदृशे मनसि सुखेन उपदेशगुणाः विशन्ति?

२१. किम् अमलम्?

२२. कीदृशः निशाकरः दोषजातं हरति?

२३. निशाकरः कीदृशं दोषजातं हरति?

२४. सर्वव्याधिप्रशमनहेतुः कः?

## १६.५) साम्प्रतं मूलपाठम् अवगच्छाम – ५

**अयमेव चानास्वादित–विषय–रसस्य ते काल उपदेशस्य। कुसुमशर–शर–प्रहारजर्जरिते हि हृदये जलमिव गलत्युपदिष्टम्। अकारणञ्च भवति दुष्प्रकृतेरन्वयः श्रुतं चाविनयस्य। चन्दनप्रभवो न दहति किमनलः? किंवा प्रशमहेतुनापि न प्रचण्डतरीभवति वडवानलो वारिणा? गुरूपदेशश्च नाम पुरुषाणामखिलमलप्रक्षालनक्षममजलस्नानम्, अनुपजातपलितादिवैरूप्यमजरं वृद्धत्वम्, अनारोपितमेदोदोषं गुरूकरणम्, असुवर्णविरचनमग्राम्यं कर्णाभरणम्, अतीतज्योतिरालोकः, नोद्वेगकरः प्रजागरः। विशेषेण राज्ञाम्। विरला हि तेषामुपदेष्टारः। प्रतिशब्दक इव राजवचनमनुगच्छति जनो भयात्। उद्दामदर्पश्वयथुस्थगित–श्रवणविवराश्चोपदिश्यमानमपि ते न शृण्वन्ति। शृण्वन्तोऽपि च गजनिमीलितेनावधीरयन्तः खेदयन्ति हितोपदेशदायिनो गुरून्। अहङ्कार–दाहज्वर–मूर्च्छान्धकारिता विह्वला हि राजप्रकृतिः, अलीकाभिमानोन्मादकारीणि धनानि, राज्यविषविकार–तन्द्राप्रदा राजलक्ष्मीः।**

**व्याख्यानम् -**

अयम् एव एष एव अनास्वादितविषयरसस्य अनास्वादितः अननुभूतः विषयाणां रूपशब्दादीनां रसः गुणः येन तादृशस्य अननुभूतसुन्दरीसुवर्णादिभोग्यगुणस्य, ते तव, उपदेशस्य शिक्षायाः, कालः समयः। आस्वादितविषयरसाय पुरुषाय उपदेशः तथा सुफलं न जनयति।

हि यस्मात्करणात् कुसुमशर-शर-प्रहारजर्जरिते कुसुमशरस्य कामदेवस्य ये शराः बाणाः तैः प्रहाराः अभिघाताः, तैः जर्जरिते कामदेवबाणाभिघाताक्रान्ते हृदये चित्ते उपदिष्टं गुरूपदेशो जलम् इव सलिलम् इव गलति क्षरति।

अकारणञ्च भवति दुष्प्रकृतेरन्वयः श्रुतं चाविनयस्य। दुष्प्रकृतेः दुष्टस्वभावस्य अविनयस्य नम्रतारहितस्य पुरुषस्य, अन्वयः वंशः, श्रुतं शास्त्रश्रवणं च अकारणम् अहेतुः सत्कर्माचरणस्य हेतुर्न भवति। उक्तं च हितोपदेशे-

"न धर्मशास्त्रं पठतीति कारणं
न चाऽपि वेदाऽध्ययनं दुरात्मनः।
स्वभाव एवाऽत्र तथाऽतिरिच्यते
यथा प्रकृत्या मधुरं गवां पयः।।" इति।

उक्तमर्थं समर्थयति कविः - चन्दनप्रभवः इति। चन्दनप्रभवः शैत्यहेतुभूतात् चन्दनात् मलयजतरोः उत्पन्नः अनलः अग्निः किं न दहति न भस्मीरोति, अपि तु भस्मीकरोत्येव। किंवा अथवा प्रशमहेतुना अपि शैत्यकारणेन अपि वारिणा सागरसलिलेन वडवानलो वडवाग्निः प्रचण्डतरीभवति समुद्दीप्तो भवति, समुद्दीप्तो भवत्येव इत्याशयः। "स्वभावो दुरतिक्रम" इति न्यायात् शैत्यकारणं यथा न अनलोपशमस्य हेतुः एवमेव शास्त्रज्ञानं न विनयस्य हेतुः।

गुरूपदेशं बाहुल्येन प्रशंसति- गुरूपदेशः इति। गुरूपदेशः आचार्यशिक्षा नाम पुरुषाणां जनानाम् अखिलमलप्रक्षालनक्षमम् अखिलमलानां समस्तकामक्रोधादीनां कर्दमादीनां च प्रक्षालनक्षमं शोधनसमर्थम् अजलस्नानं सलिलरहितस्नानस्वरूपः। स्नानान्तरं तु सलिलसहितम् इदं च स्नानं सलिलरहितम् इति विशेषः।

गुरूपदेशः अनुपजातपलितादिवैरूप्यम् अनुपजातम् अनुत्पन्नं पलितादि जरसा केशादौ शौक्ल्यादि वैरुण्यं विरूपता यस्मिन् तत् तादृशम् अजरं जरारहितं वृद्धत्वं वृद्धभावः। गुरूपदेशः तादृशं वृद्धत्वं यत्र पलितादि विरूपता जरा च न भवतीति भावः। यथा आह भगवान् मनुः मनुसंहितायां-

"न तेन वृद्धो भवति येनाऽस्य पलितं शिरः।

यो वै युवाऽप्यधीयानस्तं देवाः स्थविरं विदुः।।" इति (२-१५६)।

गुरूपदेशः अनारोपितमेदोदोषं अनारोपितः अकारितः मेदोदोषः पृथुलत्वोत्पादकमेदोनामकधातुवृद्धिदोषो येन तत् तादृशं तादृशं गुरूकरणं गौरवहेतुस्वरूपः। अन्यत्र गौरवे मेदोदोषः भवति, गुरूपदेशेन गुरुत्वे तु न तादृशो मेदोदोष इति तात्पर्यम्।

गुरूपदेशः असुवर्णविरचनम् न सुवर्णेन कनकेन विरचना निर्मितिः यस्य तत्तादृश्यम् अग्राम्यं ग्राम्यभण्डादिवाक्यातिरिक्तम् अतिरमणीयम्। गुरूपदेशः सुवर्णसंघटनरहितो अपि विदग्धोक्तत्वाद् अतिरमणीयः।

गुरूपदेशः अतीतज्योतिः अतीतं गतं ज्योतिः तेजः यस्मात् स तादृशः आलोकः प्रकाशः। गुरूपदेशः सर्वप्रकाशाऽभिभावि अपूर्वम् अन्तर्ज्योतिः भवति।

गुरूपदेशः नोद्वेगकरः न व्याकुलचित्ततोत्पादकः प्रजागरः प्रबोधः। अन्यस्मिन् प्रबोधे तु चित्तं व्याकुलं भवति अस्मिन् गुरूपदेशाख्ये प्रबोधे तु चित्तव्याकुलता न भवतीति तात्पर्यम्।

विशेषेण आधिक्येन राज्ञां भूपालानां गुरूपदेशः तत्तद्गुणविशिष्टो भवति। हि यतः तेषां राज्ञाम् उपदेष्टारः उपदेशकाः विरलाः अल्पाः भवन्ति। प्रायः सर्वे राजनिर्देशस्य अनुवर्तिनो भवन्ति। अतः राजोपदेशका विरला भवन्ति।

जनः लोकः भयात् त्रासात् राजवचनं भूव पभाषितं प्रतिशब्दकः प्रतिध्वनिः इव अनुगच्छति अनुसरति।

उद्दामदर्पाः उद्दामा विस्तृता दर्पा गर्वाः एव श्वयथवः, तैः स्थगितानि आच्छादितानि श्रवणविवराणि कर्णच्छिद्राणि येषां ते उद्दामदर्पश्वयथु-स्थगितश्रवणविवराः राजानः उपदिश्यमानम् अपि कथ्यमानम् अपि न शृण्वन्ति श्रवणयोग्यत्वेन न स्वीकुर्वन्ति।

शृण्वन्तः आकर्णयन्तः अपि ते राजानः गजनिमीलितेन गजस्य हस्तिनः इव यत् निमीलितं नयनसङ्कोचनं तेन अवधीरयन्तः अवहेलयन्तः हितोपदेशदायिनः शिक्षाप्रदायकान् गुरून् आचार्यान् खेदयन्ति क्लेशयन्ति।

हि यस्मात् कारणात् राजप्रकृतिः नृपस्वभावः अहङ्कारदाहज्वरमूर्च्छान्धकारिता अहङ्कारः दर्पः एव यो दाहज्वरः तीव्रतापः तेन या मूर्च्छा मोहः तया अन्धकारिता सञ्जाताऽन्धकारा लुप्तचेतना। अत एव

विह्वला विक्लवा। धनानि सम्पत्तयः अलीकाभिमानोन्मादकारीणि अलीकः मिथ्यारूपः योऽभिमानः अहङ्कारः स एव उन्मादः चित्तविभ्रमः रोगविशेषः, तं कुर्वन्तीति तच्छीलानि तादृशानि भवन्ति। राजलक्ष्मीः भूपश्रीः आधिपत्यश्रीः राज्यविषविकारतन्द्राप्रदा राज्यं राष्ट्रम् एव विषं गरलं तस्माद् यो विकारः विकृतिः तेन या तन्द्रा अलसता, तां प्रददाति।

### सरलार्थः -

न हि भोगः भोगेन उपशाम्यति। अतः चन्द्रापीडेन अधुनापि शब्दस्पर्शादीनां भोगानां भोगः न कृतः, तस्माद् उपदेशाय अयम् उचितः कालः। यतो हि विषयासक्ते हृदये उपदेशः जलमिव गलति। अर्थात् सत्प्रभावं न विस्तारयति। यथा अग्निः जलेन शाम्यति तथैव कामदेवस्य कामबाणदग्धं हृदयम् उपशमयितुं जलं सिञ्चति उपदेशः। परन्तु ये दुष्टस्वभावसम्पन्नाः अपि च येषां विनयः नास्ति तेषां शास्त्रश्रवणेन मनसः शान्तिः न जायते। चन्दनकाष्ठादुत्पन्नः अग्निः किं न दहति? जलेन तु अग्निः शाम्यति परन्तु वडवाग्निः नाम प्रबलः अग्निः जलेन किं शाम्यति? नैव, अपि तु पूर्वापेक्षया प्रबलः भवति। स्नानकाले जलेन शरीरस्थमलानां प्रक्षालनं भवति। गुरोः उपदेशः तु सर्वविधमानसिकमालिन्यं प्रक्षालयति। तद् हि जलं विना स्नानम्।अपि च गुरूपदेशः यत्र केशाः विरूपाः न भवन्ति तथा वृद्धभावः, सुवर्णनिर्मिताभावे सत्यपि रम्यः, आलोकादपि अधिकः प्रकाशः, अनुद्वेगकारकः प्रबोधः। अयमुपदेशः राज्ञां हितकारकः। यतो हि राज्ञाम् उपदेष्टारः अल्पा भवन्ति अधिकास्तु राजाज्ञानुपालकाः। केचन अहङ्काराच्छन्ना राजान उपदेशं न स्वीकुर्वन्ति, ते शृण्वन्तः अपि नेत्रसङ्कोचद्वारा तिरस्कुर्वन्ति। ते अहङ्कारिणः, धनरत्नादिषु च अभिमानिनः भवन्ति। तस्मात् तेषां राजलक्ष्मीः राज्यस्य हानिमेव प्रददाति। अतः चन्द्रापीडः विषयासक्तो न भूत्वा गुरूपदेशं श्रुत्वा च राज्यं पालयेत्, तेन राज्यस्य राजलक्ष्मीः प्रसन्ना सती राज्यस्य अभ्युन्नतिं विधास्यति इति शुकनासस्य आशयः।

### व्याकरणविमर्शः

**क) समासः -**

१. अनास्वादितविषयरसस्य - न आस्वादितः अनास्वादितः इति नञ्तत्पुरुषः। विषयस्य रसः विषयरसः इति षष्ठीतत्पुरुषः। अनास्वादितः विषयरसः येन सः अनास्वादितविषयरसः इति बहुव्रीहिसमासः, तस्य अनास्वादितविषयरसस्य।

२. कुसुमशरशरजर्जरिते - कुसुमशरस्य शरः कुसुमशरशरः इति षष्ठीतत्पुरुषः। तेन जर्जरिते कुसुमशरशरजर्जरिते इति तृतीयातत्पुरुषः।

३. उद्दामदर्पाश्वयथुस्थगितश्रवणविवराः - उद्दामा दर्पा उद्दामदर्पा इति कर्मधारयसमासः, उद्दामदर्पा एव अश्वयथवः उद्दामदर्पाश्वयथवः इति कर्माधारयसमासः, तैः स्थगितानि श्रवणविवराणि येषां ते उद्दामदर्पाश्वयथुस्थगितश्रवणविवराः इति बहुव्रीहिसमासः।

४. अहङ्कारदाहज्वरमूर्च्छान्धकारिता - अहङ्कारः एव दाहज्वरः अहङ्कारदाहज्वरः इति कर्मधारयः। तेन मूर्च्छा अहङ्कारदाहज्वरमूर्च्छा इति तृतीयातत्पुरुषः। तया अन्धकारिता अहङ्कारदाहज्वरमूर्च्छान्ध-कारिता इति तृतीयातत्पुरुषः।

**ख) सन्धिविच्छेदः**

१. गलत्युपदिष्टम् - गलति उपदिष्टम्।

२. अकारणञ्च – अकारणम् च।

३. अतीतज्योतिरालोकः - अतीतज्योतिः आलोकः।

## अलङ्कारविमर्शः

१. कुसुमेत्यस्मिन् वाक्ये उपमेयेन उपदिष्टम् इत्यनेन उपमानस्य जलम् इत्यस्य अवैधर्म्यस्य साम्यस्य कथनाद् उपमालङ्कारः।

२. नेत्यस्मिन् वाक्ये गुरूपदेशरूपे उपमेये स्नानादीनामुपमानानां तत्तद्वैशिष्ट्यारूढत्वाद् अधिकाररूढवैशिष्ट्यरूपकम् अलङ्कारः। तदुक्तं दर्पणे - "अधिकाररूढवैशिष्ट्यं रूपकं यत्तदेव तत्।" इति।

**कोशः**

३. "दन्ती दन्तावलो हस्ती द्विरदोऽनेकपो द्विपः।

मतङ्गजो गजो नागः कुञ्जरो वारणः करी।।" इत्यमरवचनात् गजशब्दस्य दन्ती, दन्तावलः, हस्ती, द्विरदः, अनेकपः, द्विपः, मतङ्गजः, नागः, कुञ्जरः, वारणः, करी इत्येते पर्यायाः।

४. "विश्वमशेषं कृत्स्नं समस्तनिखिलाखिलानि निःशेषम्।

समग्रं सकलं पूर्णमखण्डं स्यादनूनके।।" इत्यमरवचनात् अनूनकम्, विश्वम्, अशेषम्, कृत्स्नम्, समस्तम्, निखिलम्, अखिलम्, निःशेषम्, समग्रम्, सकलम्, पूर्णम्, अखण्डम् इत्येते पर्यायवाचकाः शब्दाः।

## पाठगतप्रश्नाः- ५

२५. गुरोः उपदेशेन कीदृशं हृदयं शान्तं भवति?

२६. गुरोः उपदेशः केषाम् अकारणं भवति?

२७. गुरूपदेशेन कीदृशं वृद्धत्वं भवति?

२८. अयम् उपदेशः विशेषेण केषां प्रति युक्तम्?

२९. राजप्रकृतिः कीदृशी?

३०. अहङ्कारिणः राज्ञः राजलक्ष्मीः कीदृशी?

## पाठसारः

आज्ञा गुरूणाम् ह्यविचारणीया। गुरूपदेशो हि नद्यां कैवर्तकः इव। तस्य उपदेशः एव सर्वदा सर्वथा च नः रक्षकः। उज्जयिनीनरेशः तारापीडः स्वपुत्रस्य चन्द्रपीडस्य यौवराज्याभिषेकम् इष्टवान्। अतः स सेवकान् सामग्रीसंग्रहाय आदिष्टवान्। चन्द्रापीडः यौवराज्याभिषेकात् पूर्वमेव प्रधानामात्येन शुकनासेन सह साक्षात्काराय गतः। तदा राज्यशासनाय उपयुक्तं विनयिनं शुकनासं विनयितरं विधातुं शुकनास उपदेशम् अयच्छत्।

योग्यगुणविशिष्टः एव चन्द्रापीडः युवराजपदे अभिषेकाय युक्तः। परन्तु गुणसत्त्वेऽपि यौवनसत्त्वात् धनादिप्रभावेण च तमः-अहङ्कार-अभिमानादीनि आयान्ति। किञ्च, तेभ्यः औद्धत्यम् अविवेकता मदमत्तता च जायन्ते। ततः अशास्त्रीये नीतिविरुद्धे च मार्गे प्रवर्तते जनः। धनप्रभावाद् यः अभिमानरूपः ज्वरः भवति तद् औषधेनापि न निवार्यते। वनितादिविषयसंसर्गाद् या आसक्तिः उत्पद्यते सा दुरपनेया भवति। राज्यप्राप्त्यनन्तरं बहवः राजानः आत्मानं सर्वेश्वरत्वेन मन्यन्ते। ते भोगनिद्रात उत्थातुम् असमर्था भवन्ति। इत्थं राज्यप्राप्त्यनन्तरं चन्द्रापीडः मा कुर्यात् इति बोधयितुं शुकनासः धनस्य दुष्प्रभावं कथितवान्।

गर्भेश्वरत्वम्, अभिनवयौवनत्वम्, अप्रतिमरूपत्वम्, अमानुषशक्तित्वम् - एते चत्वारः अनर्थस्य मूलभूताः। तेषु एकः एव मानवम् अधः पातयितुं समर्थः। तेषां समुदायस्य सत्त्वे तु विनाशः अवश्यम्भाव्यः। यौवनारम्भे बुद्धिः भ्रान्ता भवति। तीव्रः वायुः यथा शुष्कपत्राणि बहुदूरं नीत्वा गच्छति एवं इन्द्रियाणि बुद्धिं बहुदूरं नयन्ति। धनयुवत्यादिविषये चित्तम् अत्यन्तम् आकृष्टं भवति। तेषु संस्पृष्टं चित्तं नान्यं ततो वाञ्छति किञ्चित्। तेन नृपाणां बलं प्रतिदिनं क्षीणं भवति। एवञ्च एतेषां दुष्प्रभाववर्णनेन एतेषु आसक्तिः न कार्या इति चन्द्रापीडं प्रति शुकनासस्योपदेशः।

निर्मलमणौ यथा चन्द्रकिरणः साधु निपपति एवमेव चन्द्रापीडादीनां शुद्धचित्तानां हृदये गुरोः उपदेशः सुष्ठु प्रविशति। साधु वस्त्वपि क्वापि दुःखाय भवति केषाञ्चित्। यथा जलं जीवनदं परन्तु कर्णे प्रविष्टे सति पीडां जनयति एवमेव दुर्जनानां समीपे गुरूपदेशः क्लेशाय कल्पते। चन्द्रस्य प्रकाशेन तमो यथा निरस्यते एवमेव गुरूपदेशेन लोभमोहादिदोषाः अपह्रियन्ते। समीचीना राजानः ये भवन्ति ते हितोपदेशं शृण्वन्ति। गुरूपदेशो हि जलं विना स्नानं भवति। तेन मनः अमलं भवति। गुरूपदेशो हि आनन्ददायकः रम्यः सज्जनानाम्। गुरूपदेशश्रवणेन सज्जनानां मनसि प्रसन्नता उदेति।

अन्ये अहङ्काराच्छन्नाः तु हितोपदेशम् अशृण्वन्तः तिरस्कुर्वन्तः च विषयभोगेन विनाशं यान्ति। तेषां राज्यलक्ष्मी अहर्निशं तम् अधो निपातयति। तेषां राज्यस्य हानिः भवति। तस्मात् श्रियः स्वभावः ज्ञेयः, साधु स्मृत्वा स्वकर्मसु प्रवर्तनीयम्। गुरूणाम् आशिषा तेषाम् उपदेशेन च राज्ञां विपद् दूरीभवति। ततो गुरूणाम् आदेशः उपदेशश्च सततं पालनीय इति प्रधानामात्यः शुकनासः राजकुमारं चन्द्रापीडं प्रति उपदिदेश।

## पाठान्तप्रश्नाः

१. आज्ञा गुरूणां ह्यविचारणीया इति सूक्तिं समर्थयत।

२. धनातिशयभोगः कुतो न कार्यः सयुक्ति प्रमाणयत।

३. गुरुभ्यः श्रद्धा आनुगत्यञ्च कुतः अपेक्षते?

४. कुतः अयं गुरूपदेशः अनन्यः?

५. गुरूणाम् आदेशम् उपेक्ष्यमाणानाम् अवस्थां वर्णयत।

६. के चत्वारः विषयाः मनुष्यान् विनाशयन्ति, कुतः?

७. कथं गुरूणाम् उपदेशानुसारं राज्यं परिपालनीयम्?

८. गुरूपदेशः विशेषेण राज्ञः प्रति कुतः युक्तः इति प्रतिपादयत।

९. यौवनकाले नराणां स्वभावे किमर्थं भ्रमाः उत्पद्यन्ते?

१०. कादम्बरीं परिचाययत।

## पाठगतप्रश्नोत्तराणि

१. चन्द्रापीडः तारापीडस्य पुत्रः।

२. राजा तारापीडः चन्द्रापीडस्य यौवराज्याभिषेकं चिकीर्षुः आसीत्।

३. राजा उपकरणसंग्रहार्थं प्रतीहारान् आदिष्टवान्।

४. चन्द्रापीडः यौवराज्याभिषेकात् पूर्वम् आगतवान्।

५. तारापीडस्य प्रधानमन्त्रिणः शुकनासः नाम आसीत्।

६. शुकनासः आरूढविनयं चन्द्रापीडं विनीततरं कर्तुम् उपदेशं दत्तवान्।।

७. कादम्बरी एका कथा।

८. सर्वशास्त्राणि तेन अधीतानि ज्ञातानि च तस्मात् चन्द्रापीडः न उपदेष्टव्यः।

९. यौवनदशायाम् उत्पन्नं तमः अभानुभेद्यम् अरत्नालोकोच्छेद्यम् अप्रदीपप्रभा-पनेयम् अतिगहनं च अस्ति।

१०. धनेन उत्पन्नः नेत्ररोगः अञ्जनवर्त्या निवारणयोग्यः नास्ति।

११. धनस्य अभिमानरूपात् जाता उष्णता अशिशिरोपचारहार्या।

१२. स्रगादीनां विषयसम्भोगजातः मोहः अमूलमन्त्रगम्यः।

१३. रत्नानाम् आलोकः रत्नालोकः इति षष्ठीतत्पुरुषः। रत्नालोकेन उच्छेद्यं रत्नालोकोच्छेद्यम् इति तृतीयातत्पुरुषः। न रत्नालोकोच्छेद्यम् अरत्नालोकोच्छेद्यम् इति नञ्तत्पुरुषः।

१४. न अल्पमपि उपदेष्टव्यम् इति सन्धिविच्छेदः।

१५. गर्भेश्वरत्वम् अभिनवयौवनत्वम् अप्रतिमरूपत्वम् अमानुषशक्तित्वम् इति महती सर्वा अनर्थपरम्परा।

१६. स्रक्चन्दनवनितादिषु आसक्तिः मनुष्यान् कुमार्गे चालयित्वा नाशयति।

१७. न उज्झिता अनुज्झिता इति नञ्तत्पुरुषः। अनुज्झिता धवलता यया सा अनुज्झितधवलता इति तृतीयातत्पुरुषः।

१८. खलु अन्वर्थपरम्परा इति सन्धिविच्छेदः।

१९. रजसाम् इत्यस्य रजोगुणानाम् इत्यर्थः, अत्र षष्ठी विभक्तिः।

२०. अपगतमले मनसि सुखेन उपदेशगुणाः विशन्ति।

२१. गुरुवचनम् अमलम्।

२२. प्रदोषसमयनिशाकरः निशाकरः दोषजातं हरति।

२३. निशाकरः अतिमलिनम् अन्धकारमिव दोषजातं हरति।

२४. सर्वव्याधिप्रशमनहेतुः गुरूपदेशः।

२५. गुरोः उपदेशेन कामबाणजर्जरितं हृदयं शान्तं भवति।

२६. गुरोः उपदेशः दुष्प्रकृतेः अकारणं भवति।

२७. गुरूपदेशेन अनुपजातपलितादिवैरूप्यजरं वृद्धत्वं भवति।

२८. गुरूपदेशः विशेषेण राज्ञां युक्तम्।

२९. अहङ्कारदाहज्वरमूर्च्छान्धकारिता विह्वला च राजप्रकृतिः।

३०. अहङ्कारिणः राज्ञः राज्यविषविकारतन्द्राप्रदा राजलक्ष्मीः।

---

॥ इति षोडशः पाठः ॥

---

१७

# शुकनासोपदेशः - लक्ष्मीचापल्यम्

## प्रस्तावना

अस्मिन् पाठे शुकनासोपदेशस्य 'आलोकयतु तावत्' इत्यतः आरभ्य 'चिन्तितापि वञ्चयति' इत्यन्तः अंशः वर्ण्यते। जलबुद्बुदसमाना क्षणस्थिरा श्रीः सहसैव उदेति नाशमेति च। सा क्षणाय भासते क्षणाय च विलीयते। परन्तु अहो, अस्याः लीलावशात् नराः धनापगमने क्षीणाः पीडिताः दुःखिताश्च सन्तः अपि पुनः तामेव प्रार्थयन्ति। इत्थं मोहिनीयं श्रीः। सा श्रीः यौवनावस्थायां चाञ्चल्यं वर्धयति येन वयं सद्गुणेभ्यः विसृष्टाः स्याम। परन्तु गुरूपदेशो हि लोकोपकाराय। ततः अमात्यः शुकनासः उपदिशति यद् यौवनस्य चञ्चलता यत्नेन परिहर्तव्या। तदा एव राजलक्ष्मीः अभ्युन्नतिं साधयति। सा अपकर्मणां तत्प्रवृत्तानाञ्च कथं सहायिका इति ध्यात्वा लोभाविष्टः मा भूत्वा सविचारं जीवनं परिपालनीयं तथा उन्नत्यै यतनीयमित्यमयमत्र चन्द्रापीडाय उपदेशः पाठे अस्मिन् आलोच्यते -

## उद्देश्यानि

अमुम् पाठं पठित्वा भवान् -

- राजलक्ष्म्याः प्रभावं जानीयात्।
- राजलक्ष्म्याः स्वरूपं जानीयात्।
- राजलक्ष्म्याः स्वभावं जानीयात्।
- मानवजीवने राजलक्ष्म्याः प्रभावं जानीयात्।
- वाक्यानाम् अन्वयार्थान् पदानां सरलार्थान् समासान् च जानीयात्।

## १७.१) साम्प्रतं मूलपाठम् अवगच्छाम–६

**आलोकयतु तावत् कल्याणाभिनिवेशी लक्ष्मीमेव प्रथमम्। इयं हि सुभट-खड्गमण्डलोत्पल-वन-विभ्रम-भ्रमरी लक्ष्मीः क्षीरसागरात् पारिजातपल्लवेभ्यो रागम्, इन्दुशकलादेकान्तवक्रताम्, उच्चैःश्रवसश्चञ्चलतां, कालकूटान्मोहनशक्तिं, मदिराया मदं, कौस्तुभमणेर्नैष्ठुर्यम् इत्येतानि सहवासपरिचयवशाद्विरहविनोदचिह्नानि गृहीत्वैवोद्गता।**

**व्याख्यानम् -**

कल्याणाभिनिवेशी कल्याणे मङ्गले अभिनिवेशी आग्रहान्वितो भवान् प्रथमम् आदौ लक्ष्मीं श्रियमेव तावद् आलोकयतु वस्तुतो विचारयतु।

हि तथाहि, सुभट-खड्गमण्डलोत्पल-वन-विभ्रम-भ्रमरी लक्ष्मीः सुभटा निपुणयोद्धारः तेषां खड्गमण्डलम् असिसमुदाय एव उत्पलवनं कमलारण्यं तत्र विभ्रमे विचरणे भ्रमरी मधुकरस्त्रीस्वभावा इयं लक्ष्मीः राजश्रीः। इयम् एषा लक्ष्मीः श्रीः पारिजातपल्लवेभ्यः उत्पद्यमानेभ्यः देववृक्षविशेषेभ्यः पारिजातकिसलयेभ्यः रागम् आरुण्यं आत्मनि लोकानुरागं गृहीत्वा स्वीकृत्य इव क्षीरसागरात् दुग्धसमुद्राद् उद्गता मन्थनकाले समुत्थिता। यथा कश्चित्स्थानान्तरं गन्तुं प्रवर्तते तदा स्वकीयमुपकरणं गृहीत्वा गच्छति तथैवायं लक्ष्मीरपि रागादिकमादाय आगता। इयं राजलक्ष्मीः इन्दुशकलात् चन्द्रखण्डात् एकान्तवक्रतां नितान्तं कौटिल्यम्, उच्चैःश्रवसः अश्वेषु प्रधानस्य ऐन्द्रस्य अश्वस्य चञ्चलतां चापल्यम्, कालकूटात् कालकूटसंज्ञकविषात् मोहनशक्तिं मूर्च्छनशक्तिम्, मदिरायाः सुरायाः मदम् औद्धत्यम्, कौस्तुभमणेः भगवतः श्रीविष्णोः कण्ठस्थस्य विशेषरत्नस्य नैष्ठुर्यं निष्ठुरताम् इत्येतानि रागप्रभृतीनि सहवासपरिचयवशाद् एकत्रावस्थितिप्रणयवशाद् विरहविनोदचिह्नानि वियोगदुःखापनोदनलक्ष्माणि गृहीत्वा आदाय, इव, उद्गता प्रादुर्भूता।

## सरलार्थः -

चन्द्रापीडस्य यौवराज्याभिषेकं भविष्यति। तस्य च राजकार्यचालनाय राजलक्ष्मीज्ञानम् अपेक्षते। अतः शुभर्थी शुकनासः तस्मै राजलक्ष्मीज्ञानं ददाति -

चन्द्रापीडः कल्याणे आग्रही अस्ति अतः तेनादौ लक्ष्मीः विचार्या। इयं लक्ष्मीः खड्गमङ्गलनामके वने भ्रमन्ती भ्रमरी। न केवलम् एतदेव, इयं तु क्षीरसमुद्रे जातात् पारिजातवृक्षात् रागम्, चन्द्रमण्डलात् वक्रताम्, उच्चैश्रवसः चञ्चलताम्, कालकूटनामकात् विषात् मोहिनीं शक्तिम्, मदिरायाः अहङ्कारम्, कौस्तुभमणेः निष्ठुरतां च स्वीकृत्य विनोदवियोगचिह्नसहिता इयं लक्ष्मीः आविर्भूता।

### व्याकरणविमर्शः -

**क) समासः**

१. सुभटखड्गमण्डलोत्पलवनविभ्रमभ्रमरी - खड्गानां मण्डलं खड्गमण्डलमिति षष्ठीतत्पुरुषः। सुभटानां खड्गमण्डलं सुभटखड्गमण्डलमिति षष्ठीतत्पुरुषः। सुभटखड्गमण्डलमेव उत्पलवनं सुभटखड्गमण्डलोत्पलवनम् इति कर्मधारयसमासः। सुभटखड्गमण्डलानाम् उत्पलवनमिति इति वा षष्ठीतत्पुरुषः। सुभटखड्गमण्डलोत्पलवने विभ्रमः सुभटखड्गमण्डलोत्पलवनविभ्रमः इति सप्तमीतत्पुरुषः। सुभटखड्गमण्डलोत्पलवनविभ्रमे भ्रमरी सुभटखड्गमण्डलोत्पलवनविभ्रमभ्रमरी इति सप्तमीतत्पुरुषसमासः।

२. पारिजातपल्लवेभ्यः- पारिजातस्य पल्लवानि पारिजातपल्लवानि इति षष्ठीतत्पुरुषः। तेभ्यः पारिजातपल्लवेभ्यः इति पञ्चमीतत्पुरुषः।

**ख) सन्धिविच्छेदः**

१. इन्दुशकलादेकान्तवक्रताम् – इन्दुशकलात् एकान्तवक्रताम्।

२. कालकूटान्मोहनशक्तिम् – कालकूटात् मोहनशक्तिम्।

३. गृहीत्वैवोद्गता – गृहीत्वा एव उद्गता।

### अलङ्कारविमर्शः

१. इयम् इत्यस्मिन् वाक्ये गृहीत्वा इव इत्यत्र लक्ष्म्याः स्वयमेव वक्रादिमत्त्वे सत्यपि वक्रादिग्रहणक्रियोत्प्रेक्षणात् क्रियोत्प्रेक्षा। उत्प्रेक्षायाः सामान्यलक्षणं - "भवेत्सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मना।" इति। अत्र रागाद्यर्थस्य रक्तिमादेः अनुरागादेश्च भिन्नत्वे सत्यपि श्लेषेणाभेदारोपाद् अतिशयोक्तिः। तल्लक्षणं दर्पणे - "सिद्धत्वेऽध्यवसायस्यातिशयोक्तिर्निगद्यते।" इति।

कोशः

१. "हिमांशुश्चन्द्रमाश्चन्द्र इन्दुः कुमुदबान्धवः" इत्याद्यमरवचनात् इन्दुशब्दस्य हिमांशुः, चन्द्रमाः, चन्द्रः, कुमुदबान्धवः इत्यादयः पर्यायाः।

## पाठगतप्रश्नाः- १

१. लक्ष्मीः कस्मात् रागं स्वीकृतवती?

२. श्रीः कस्मात् चञ्चलतां शिक्षितवती?

३. लक्ष्मीः कस्मात् नैष्ठुर्यं ज्ञातवती?

४. मोहनशक्तिः श्रिया कुतः शिक्षिता?

५. लक्ष्मीः ............... पारिजातपल्लवेभ्यः रागं गृहीत्वैवोद्गता।

६. आलोकयतु तावत् ......................... लक्ष्मीरेव प्रथमम्।

७. स्तम्भमेलनं कुरुत।

| स्तम्भः - १ | स्तम्भः - २ |
|---|---|
| क) रागम् | कालकूटात् |
| ख) वक्रताम् | उच्चैःश्रवसः |
| ग) चञ्चलताम् | कौस्तुभमणेः |
| घ) मोहनशक्तिम् | मदिरायाः |
| ङ) मदम् | इन्दुशकलात् |
| च) नैष्ठुर्यम् | पारिजातपल्लवेभ्यः |

८. कालकूटान्मोहनशक्तिम् इत्यस्य सन्धिविच्छेदं कुरुत।

## १७.२) साम्प्रतं मूलपाठम् अवगच्छाम – ७

**न ह्येवंविधम् अपरिचितमिह जगति किञ्चिदस्ति, यथेयमनार्या। लब्धापि खलु दुःखेन परिपाल्यते। दृढगुणपाश–सन्दान–निष्पन्दीकृतापि नश्यति, उद्दाम–दर्प–भटसहस्रोल्लासितासिलता–पञ्जर–विधृताप्यपक्रामति। मदजल–दुर्दिनान्धकारगज–घन–घटा–परिपालितापि प्रपलायते, न परिचयं रक्षति, नाभिजनमीक्षते, न रूपमालोकयते, न कुलक्रममनुवर्तते, न शीलं पश्यति, न वैदग्ध्यं गणयति, न श्रुतमाकर्णयति, न धर्ममनुरुध्यते, न त्यागमाद्रियते, न विशेषज्ञतां विचारयति, नाचारं पालयति, न सत्यमनुबुध्यते, न लक्षणं प्रमाणीकरोति। गन्धर्वनगरलेखेव पश्यत एव नश्यति। अद्याप्यारूढ–मन्दर–परिवर्तावर्त–भ्रान्ति–जनित–संस्कारेव परिभ्रमति। कमलिनी–सञ्चरणव्यतिकर–लग्न–नलिन–नाल–कण्टकक्षतेव न क्वचिदपि निर्भरमाबध्नाति पदम्। अतिप्रयत्नविधृतापि परमेश्वरगृहेषु विविध–गन्धगज–गण्ड–मधुपान–मत्तेव परिस्खलयति। पारुष्यमिव उपशिक्षितुम् असिधारासु निवसति। विश्वरूपत्वमिव ग्रहीतुमाश्रिता नारायणमूर्त्तिम्। अप्रत्ययबहुला च दिवसान्त–कमलमिव समुपचित–मूल–दण्ड–कोशमण्डलमपि भूभुजम्। लतेव विटपकानध्यारोहति। गङ्गेव वसुजनन्यपि तरङ्गबुद्बुदचञ्चला। दिवसकरगतिरिव प्रकटित–विविध–सङ्क्रान्तिः। पातालगुहेव तमोबहुला। हिडिम्बेव भीमसाहसैकहार्यहृदया। प्रावृडिवाचिरद्युतिकारिणी। दुष्टपिशाचीव दर्शितानेकपुरुषोच्छ्राया स्वल्पसत्त्वमुन्मत्तीकरोति।**

**व्याख्यानम् -**

इह जगति अस्मिन् संसारे, एवंविधम् एतादृशम्, अपरिचितं परिचयनिबन्धनप्रेमनिरासक्तम् अपरम् अन्यत् किञ्चिद् वस्तु नास्ति न वर्तते, यथा येन प्रकारेण, इयम् अनार्या नीचस्वभावोपेता राजलक्ष्मीः। लब्धा अपि प्राप्ता अपि खलु निश्चयेन महता क्लेशेन दुःखेन परिपाल्यते पोषणं क्रियते। अर्थात्प्राप्तापि अप्राप्ता इव।

दृढगुणपाश-सन्दान-निष्पन्दीकृता दृढा गुणा सन्धिविग्रहयानद्वैधीभावा एव पाशः रज्जुः तेन यत् सन्दानं बन्धनं तेन निस्पन्दीकृता निश्चलीकृता अपि लक्ष्मीः नश्यति विनाशं याति।

उद्दाम-दर्प-भटसहस्रोल्लासितासिलता-पञ्जर-विधृता उद्दामो विपुलो दर्पः अहङ्कारो यस्य, तेन तादृशेन, भटसहस्रेण योद्धृसमूहेन, उल्लासिता ऊर्ध्वीकृता असिलता लम्बितखड्गा एवं पञ्जरं पक्ष्यादिबन्धनगृहं तत्र विधृतापि आबद्धापि लक्ष्मीः अपक्रामति अपसरति पक्षान्तरमाश्रयति।

मदजल-दुर्दिनान्धकारगज-घन-घटा-परिपालिता मदजलानि दानसलिलानि एव श्यामत्वसाम्यात् दुर्दिनानि मेघाच्छन्नदिनानि तैः अन्धकारः तमः येभ्यः ते मदजलदुर्दिनान्धकाराः तादृशा गजाः ते एव घनाः मेघाः, तेषां घटाः समूहाः, ताभिः परिपालिता अपि प्रपलायते प्रकर्षेण पलायनं करोति। सा परिचयाद्यनुरोधेन नैकत्र तिष्ठति स्वातन्त्र्येणानुवर्तते। सा गजसमूहेन रक्षितापि पक्षान्तरं याति।



सा लक्ष्मीः परिचयं परिचितं न रक्षति पालयति। सा लक्ष्मीः अभिजनं सद्वंशं न ईक्षते न पश्यति नाभिजनमीक्षते, अर्थात् सद्वंशं परित्यज्य नीचकुलमपि आश्रयति। सा लक्ष्मीः रूपं सौन्दर्यं न आलोकयते न ईक्षते, अर्थात् सुन्दरं परित्यज्य क्वचिद् दुश्चरितम् अपि आश्रयति। सा लक्ष्मीः कुलक्रमं वंशपरम्परां न अनुवर्तते न पालयति, अर्थाद् वंशपरम्परया एकत्र न तिष्ठति। सा लक्ष्मीः शीलं सच्चरितं न पश्यति न अवलोकयति, कुजनमपि सज्जनं परित्यज्य व्रजति। सा लक्ष्मीः वैदग्ध्यं पाण्डित्यं न गणयति न विचारयति, मूर्खमपि क्वचिद् अवलम्बते सा। सा लक्ष्मीः श्रुतं शास्त्रज्ञानं न आकर्णयति न शृणोति, शास्त्रज्ञं परित्यज्य शास्त्रज्ञानहीनमतः गच्छति। सा लक्ष्मीः न धर्मं पुण्यं न अनुरुध्यते पुण्यवत्त्वेन धार्मिकं न आलम्बते, पापिनमेव बहुधा सा आलम्बते। सा लक्ष्मीः त्यागं न आद्रियते दातृत्वगुणसम्पन्नत्वेन दातारं न याति, कृपणालम्बनात् बहुत्र तस्याः। सा लक्ष्मीः विशेषज्ञतां विशेषज्ञानवत्तां न विचारयति न गणयति, आचारं शिष्टसम्मतं व्यवहारं न पालयति। सा हि बहुधा विशेषज्ञं विहाय व्यापारिणं शिष्टं च विहाय दुर्जनमाश्रयते इत्यत्र तात्पर्यम्। सा लक्ष्मीः सत्यं तथ्यं न अनुबुध्यते नो जानाति, वञ्चकम् आश्रित्य एव प्रायः तिष्ठति। सा हि लक्षणं सामुद्रिकशास्त्रप्रतिपादितं शरीरगतं चिह्नं तिलकादिकं न प्रमाणीकरोति न प्रमाणयति। अत एव सुलक्षणानामपि जनानां दारिद्रता भवति।

गन्धर्वनगरलेखा भूतयोनिविशेषाणां रात्रौ अवलोक्यमानं यन्नगरं तत्पङ्क्तिः इव सा लक्ष्मीः पश्यत एव अवलोकयन्तम् अनादृत्य एव नश्यति विलयं याति। गन्धर्वनगरलेखा गन्धर्वनगरम् तच्च शास्त्रकारा अशुभसूचका मन्यन्ते। यथोक्तं बृहत्संहितायाम्-

"गन्धर्वनगरमुत्थितमापाण्डुरमशनिपातवातकरम्।

दीप्ते नगेन्द्रमृत्युर्वामेरिभयं जयः सव्ये।।" इति।

सा लक्ष्मीः अद्यापि अधुनापि आरूढ-मन्दर-परिवर्तावर्त-भ्रान्ति-जनित-संस्कारा आरूढः मन्दरस्य मन्दरपर्वतस्य परिवर्तेन य आवर्तः, तस्मिन् या भ्रान्तिः, तया जनितः उत्पन्नः य संस्कारः यस्याः सा इव तादृशी भूत्वा परिभ्रमति मुहुर्मुहुः परिभ्रमणं करोति। अर्थात् लक्ष्मीर्न कुत्राऽपि स्थैर्यमवलम्ब्य तिष्ठति।

कमलिनी-सञ्चरणव्यतिकर-लग्न-नलिन-नाल-कण्टकक्षता इव कमलिनीषु पङ्कजवल्लरीषु सञ्चरणव्यतिरेकेण भ्रमणसम्पर्केण लग्नाः नलिनानां पङ्कजानां नालकण्टकानि तैः क्षता विदीर्णा इव क्वचिदपि कुत्रापि पदं प्रतिष्ठां निर्भरं निश्चलं न आबध्नाति स्थापयति।

परमेश्वरगृहेषु राजप्रासादेषु अतिशयधनिकसदनेषु वा अतिप्रयत्नविधृता अपि अतिप्रयत्नेन अत्यन्तेन प्रयासेन विधृता स्थापिता अपि विविध-गन्धगज-गण्ड-मधुपान-मत्ता विविधाः अनेकप्रकाराः ये गन्धगजाः तेषां गण्डेषु कपालेषु मधूनि दानवारिणी एव मद्यानि तेषां पानेन आस्वादनेन मत्ता क्षिप्रा इव परिस्खलति नृपान्तरं व्रजति।

पारुष्यं कठोरताम् उपशिक्षितुम् अभ्यसितुम् इव असिधारासु खड्गाग्रभागेषु निवसति निवासं करोति। सा लक्ष्मीः विश्वरूपं विराट्स्वरूपं ग्रहीतुं स्वीकर्तुम् इव नारायणमूर्तिं विष्णुविग्रहम् आश्रिता अधिगता।

सा लक्ष्मीः अप्रत्ययबहुला अप्रत्ययः अविश्वासः बहुलः प्रचुरः यस्याः सा समुपचित-मूल-दण्ड-कोशमण्डलं समुपचितानि सुष्ठुतया वर्धितानि मूलं विजयनिमित्तं सैन्यं, दण्डः उपायविशेषः, कोशः धनं, मण्डलं राष्टं च इत्येतानि यस्य तादृशं भूभुजं नृपम् अपि मुञ्चति परित्यजति, नृपान्तरम् आलम्बते।

सा लक्ष्मीः, लता वल्ली, इव, विटपकान् वृक्षशाखाः निन्दितान् कामुकान्, अध्यारोहति अवलम्बते। अर्थात् लता यथा वृक्षशाखाम् अवलम्बते तथा इयं निन्दितान् कामुकान् अवलम्बते। सा लक्ष्मीः गङ्गा भागीरथी इव वसुजननी वसोः वस्ववतारस्य भीष्मस्य जननी माता अपि तरङ्गबुद्बुदचञ्चला तरङ्गबुद्बुदौ भङ्गजलस्फोटौ ताभ्यां चञ्चला चपला। दिवसकरगतिरिव प्रकटित-विविध-सङ्क्रान्तिः।

दिवसकरगतिः सूर्यस्य गमनम् इव प्रकटित-विविध-सङ्क्रान्तिः प्रकटिता प्रकाशिता विविधा अनेकप्रकारा संक्रान्तिः मेषवृषादिसंक्रान्तिः यया सा तादृशी इव सा लक्ष्मीः अपि प्रकटिता प्रकाशिता विविधेषु अनेकप्रकारेषु जनेषु संक्रान्तिः संचारः यया सा। पातालगुहा रसातलदरी तमोबहूला तमः अन्धकारः बहूलम् अधिकं यस्यां सा इव सा लक्ष्मीः अपि तमः तमोगुणः बहुलम् अधिकं यस्यां सा तादृशी। सा लक्ष्मीः हिडिम्बा घटोत्कटचजननी इव भीमसाहसैकहार्यहृदया भीमस्य भीमसेनस्य साहसेन बलकृतकर्मणा एकं केवलम् हार्यं हर्तुं योग्यं हृदयं चित्तं यस्याः सा। लक्ष्मीरपि भीमसाहसैकहार्यहृदया भीमसाहसैकेन परराज्याक्रमणादिहठकारेण हार्यं हर्तुं शक्यं हृदयं चेतो यस्याः तादृशी भवति। सा लक्ष्मीः प्रावृट् वर्षासमयः इव अचिरद्युतिकारिणी अचिरद्युतिं कर्तुं शीलं यस्याः सा। प्रावृट् वर्षर्तुः इव, अचिरद्युतिकारिणी अचिरद्युतिः विद्युत्, तां करोति विदधाति इति। लक्ष्मीरपि अचिरद्युतिः स्वल्पप्रकाशं करोतीति तादृशी भवति।

दुष्टपिशाची दुष्टा तमोगुणरूपदोषयुक्ता पिशिताशिनी देवयोनिविशेषस्त्री इव दर्शितानेकपुरुषोच्छ्राया दर्शितः प्रकाशितः अनेकां बहूनां पुरुषाणाम् उच्छायः औन्नत्यं यया सा, लक्ष्मीरपि दर्शितः अनेकपुरुषाणां बहूजनानाम् उच्छायः औन्नत्यं यया सा, तादृशी सती पिशाचीव स्वल्पसत्त्वम् अधीरस्वभावं नरम् उन्मत्तीकरोति उन्मादयति।

## सरलार्थः -

कीदृशी इयं लक्ष्मीः इति शुकनासः चन्द्रापीडम बोधयति यद् यथा इयं दुर्जना लक्ष्मी, तथा कापि अपरिचिता नास्ति अस्मिन् संसारे। यतो हि प्राप्ता अपि दुःखेन इयं परिपाल्यते। शौर्यादिद्वारा सुदृढतया इयं स्थाप्यते चेदपि शीघ्रमेव इयं नश्यति। बहुभिः योद्धृभिः नृपैः बद्धा अपि पलायते। मदोन्मत्तगजरूपमेघैः रक्षिता अपि विमुच्यते। केवलम् एतदेव न, सा परिचितान् न रक्षति, आत्मीयान् न पश्यति, न रूपवन्तं रक्षति, न आचारक्रमम् अनुसरति, न वा पवित्रतां परिपालयति, न विदग्धतां स्वीकरोति, न शास्त्रनीतिं शृणोति, न धर्मनियमान् अङ्गीकरोति, न त्यागम् अङ्गीकरोति, विशेषज्ञानन्तं न सम्मानयति, आचारान् न पालयति, न सत्यं वेत्ति, शरीरगतचिह्नादिकं प्रमाणरूपेण नाङ्गीकरोति। गन्धर्वनगरस्य पङ्क्तिः इव क्षणाय भासते क्षणाय च विलीयते। मन्दरपर्वतस्य भ्रमणाद् उत्पन्ना सा लक्ष्मीः स्वभाववशात् भवनात् भवनान्तरं भ्रमति। पद्मकानने विहारसमये तस्याः चरणयोः कण्टकाकीर्णत्वात् सा क्वापि चिराय पादं स्थापयितुं न समर्था। बहुभिः राज्ञैः धनकैः वा स्वभवने अतियत्नेन सा संरक्षितापि



गजकपोलस्थं मधु पीत्वा उन्मत्तेव भूत्वा अधः परिस्खलति। मन्ये सा कठोरतां शिक्षितुं खड्गधारायां निवसति। सा विश्वरूपत्वं ग्रहीतुं भगवतः श्रीविष्णोः शरीरं प्रविष्टा इति प्रतीयते। सा मध्ये मध्ये अविश्वासयुक्ता सती सन्ध्याकालीनं पद्ममिव विशालभूमण्डलाधिपं राजानमपि परित्यजति। लता यथा वृक्षम् आलम्बते तथा इयं धूर्तमपि जनम् आरोहति। देवी गङ्गा भीष्मस्य माता परन्तु तरङ्गैः बुद्बुदैश्च चञ्चला तद्वदेव लक्ष्मीः धनाधिष्ठात्री परन्तु तरङ्गः इव अस्थिरा। यथा सूर्यस्य गत्या मेषवृषादिसंक्रान्तिः भवति एवमेव इयमपि बहुषु जनेषु संक्रामति। पातालोकस्य बिलं यथा अन्धकारमयं तथा इयमपि तमोगुणसम्पन्ना। हिडिम्बा यथा भीमस्य अत्यन्तसाहसं दृष्ट्वा अभिभूता सती तेन आकृष्टा भवति एवमेव अत्यन्तसाहसिकं पुरुषं दृष्ट्वा तेन आकृष्टा भवति। वर्षर्तुः यथा अचिरद्युतिं नाम विद्युतम् उत्पादयति तद्वदेव इयमपि अचिरद्युतिं नाम क्षणस्थायिनीं कान्तिमुत्पादयति। दुष्टा पिशाची यथा स्वशरीरं वर्धयित्वा सर्वान् भाययते एवमेव इयमपि लक्ष्मीः विविधानां पुरुषाणाम् उन्नतिं दर्शयित्वा माम् अधिगच्छन्तु इत्युक्त्वा सर्वेषाम् उन्मत्ततां जनयति।

**व्याकरणविमर्शः -**

**क) समासः -**

१. दृढगुणपाशसन्दाननिष्पन्दीकृता - दृढा च ते गुणाः दृढगुणाः इति कर्मधारयसमासः। दृढगुणाः एव पाशः इति दृढगुणपाशः इति कर्मधारयसमासः। तेन सन्दानं दृढगुणपाशसन्दानम् इति तृतीयातत्पुरुषः। तेन निष्पन्दीकृता दृढगुणसन्दाननिष्पन्दीकृता इति तृतीयातत्पुरुषसमासः।

२. उद्दामदर्पभटसहस्रोल्लासितासिलतापञ्जरविधृता - उद्दामः दर्पः यस्य स उद्दामदर्पः इति बहुव्रीहिसमासः। भटानां सहस्रं भटसहस्रम् इति षष्ठीतत्पुरुषः। उद्दामदर्पः भटसहस्रम् उद्दामदर्पभटसहस्रम् कर्मधारयः। तेन उल्लासिता उद्दामदर्पभटसहस्रोल्लासिता इति तृतीयातत्पुरुषः। सा एव असिलता उद्दामदर्पभटसहस्रोल्लासिता-सिलता इति कर्मधारयः। सा एव पञ्जरम् उद्दामदर्पभट-सहस्रोल्लासितासिलतापिञ्जरम् इति कर्मधारयसमासः। तत्र विधृता उद्दामदर्पभटसहस्रोल्लासितासिलतापञ्जरविधृता इति सप्तमीतत्पुरुषः।

३. समुपचित-मूल-दण्ड-कोशमण्डलम् - मूलं च दण्डश्च कोशश्च मण्डलं च मूलदण्डकोशमण्डलानि इति इतरेतरयोगद्वन्द्वः। समुपचितानि मूलदण्डकोशमण्डलानि यस्य स समुपचितमूलदण्डकोशमण्डलः, तम् इति बहुव्रीहिसमासः।

**सन्धिविच्छेदः**

१. **यथेयम् - यथा इयम्।**

२. **वसुजनन्यपि - वसुजननी अपि।**

३. **प्रावृडिवाचरिताद्युतिकारिणी - प्रावृडिवाचरितात् अतिकारिणी।**

**अलङ्कारविमर्शः**

१. मदजल-दुर्दिनान्धकारगज-घन-घटा-परिपालिता इत्यत्र गजेषु मेघत्वारोपे मदजलेषु दुर्दिनत्वारोपो निमित्तमिति परम्परितं रूपकम्। तथाहि तल्लक्षणं दर्पणे -

"यत्र कस्यचिदारोपः परारोपणकारणम्।

तत्परम्परितम्" इति।

२. कमलिनीतीत्यस्मिन् वाक्ये, अतिप्रयत्नेतीत्यस्मिन् वाक्ये, पारुष्यमीत्यस्मिन् वाक्ये च उत्प्रेक्षालङ्कारः।

३. पातालगुहेवेतीत्यस्मिन् वाक्ये, हिडिम्बेव इत्यस्मिन् वाक्ये, प्रावृडिवेतीत्यस्मिन् वाक्ये, दुष्टपिशाचीवेत्यस्मिन् वाक्ये च उपमालङ्कारः।

**कोशः**

१. "विष्णुर्नारायणः कृष्णो वैकुण्ठो विष्टरश्रवाः" इत्याद्यमरोक्तेः विष्णुः, नारायणः, कृष्णः, वैकुण्ठः, विष्टरश्रवाः इत्यादयः समार्थकशब्दाः।

२. "अधोभुवनपातालं बलिसद्म रसातलम्। नागलोकः" इत्यमरवचनात् अधोभुवनम्, पातालम्, बलिसद्म, रसातलम्, नागलोकः इत्येते समार्थकाः शब्दाः।

३. "चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः"इत्यमरवचनात् चित्तम्, चेतः, हृदयम्, स्वान्तम्, हृत्, मानसम्, मनः इत्येते समार्थकाः।

## पाठगतप्रश्नाः- २

९. लक्ष्मीः कथं परिपाल्यते?

१०. किंभूतापि उपक्रामति?

११. श्रीः किं न रक्षति?

१२. सम्पत् किं नानुवर्तते?

१३. किं न अनुरुध्यते?

१४. किं न विचारयति लक्ष्मीः?

१५. कीदृशी इव परिस्खलति श्रीः?

१६. श्रिया किं ग्रहीतुं नारायणमूर्तिः आश्रिता?

१७. श्रीः किमिव तमोबहुला?

१८. किमिव अपरपुरुषान् उन्मत्तीकरोति?

१९. स्तम्भमेलनं कुरुत।

| स्तम्भः - १ | स्तम्भः - २ |
|---|---|
| क) न रक्षति | क) वैदग्ध्यम् |

| | |
|---|---|
| ख) न ईक्षते | ख) लक्षणम् |
| ग) न आलोकयते | ग) अभिजनम् |
| घ) न अनुवर्तते | घ) श्रुतम् |
| ङ) न पश्यति | ङ) त्यागम् |
| च) न गणयति | च) विशेषज्ञताम् |
| छ) न आकर्णयति | छ) आचारम् |
| ज) न अनुरुध्यते | ज) कुलक्रमम् |
| झ) न आद्रियते | झ) शीलम् |
| ञ) न विचारयति | ञ) रूपम् |
| ट) न पालयति | ट) परिचयम् |
| ठ) न प्रमाणीकरोति | ठ) धर्मम् |

## १७.३) साम्प्रतं मूलपाठम् अवगच्छाम – ८

**सरस्वतीपरिगृहीतमीर्ष्ययेव नालिङ्गति जनम्, गुणवन्तमपवित्रमिव न स्पृशति, उदारसत्त्वममङ्गलमिव न बहु मन्यते, सुजनमनिमित्तमिव न पश्यति, अभिजातमहिमिव लङ्घयति, शूरं कण्टकमिव परिहरति, दातारं दुःस्वप्नमिव न स्मरति, विनीतं पातकिनमिव नोपसर्पति, मनस्विनमुन्मत्तमिवोपहसति। परस्परविरुद्धश्चेन्द्रजालमिव दर्शयन्ती प्रकटयति जगति निजं चरितम्। तथाहि – सततम् ऊष्माणमुपजनयन्त्यपि जाड्यमुपजनयति। उन्नतिमादधानापि नीचस्वभावताम् आविष्करोति। तोयराशिसंभवापि तृष्णां सम्वर्धयति। ईश्वरतामादधानाप्यशिवप्रकृतित्वमातनोति। बलोपचयमाहरन्त्यपि लघिमानमापादयति। अमृतसहोदरापि कटुकविपाका। विग्रहवत्यप्यप्रत्यक्षदर्शना। पुरुषोत्तमरतापि खल–जन–प्रिया। रेणुमयीव स्वच्छमपि कलुषीकरोति। यथा यथा चेयं चपला दीप्यते तथा तथा दीपशिखेव कज्जलमलिनमेव कर्म केवलमुद्वमति।**

**व्याख्यानम् -**

सा लक्ष्मीः सरस्वतीपरिगृहीतं सरस्वत्या वाग्देव्या परिगृहीतं स्वीकृतं जनं विद्यावन्तम् अपि ईर्ष्यया अक्षान्त्या इव न आलिङ्गति न आश्लिष्यति। अनेन सपत्नीभावः प्रदर्शितः। सा लक्ष्मीः गुणवन्तं शौर्यादिगुणसम्पन्नं पुरुषम् अपवित्रम् अप्रयतं जनं अस्पृश्यम् इव न स्पृशति, उदारसत्त्वम् उदारस्वभावं पुरुषम् अमङ्गलम् अकल्याणम् इव न बहु मन्यते न आद्रियते, सुजनं सज्जनम् अनिमित्तम् इव लक्षणरहितम् इव न पश्यति नो विलोकयति, अभिजातं कुलीनम् अहिं सर्पम् इव लङ्घयति अतिक्रामति,

शूरं शौर्ययुक्तं जनं कण्टकं द्रुमाङ्गम् इव परिहरति परित्यजति, दातारं बहुप्रदं जनं दुःस्वप्नम् अशुभस्वप्नम् इव न स्मरति न ध्यायति, विनीतं विनयसंपन्नं जनं पातकिनं पापकारिणं जनम् इव न उपसर्पति न समीपं गच्छति, मनस्विनं प्रशस्तमनस्कं जनम् उन्मत्तम् उन्मादयुक्तं जनम् इव उपहसति उपहासं करोति।

सा लक्ष्मीः इन्द्रजालं कुहकं दर्शयन्ती प्रकाशयन्ती इव जगति लोके परम्परविरुद्धम् अन्योन्यविरोधयुक्तं निजं स्वकीयं चरितं वृत्तं प्रकटयति आविष्करोति। तथाहि - सततं निरन्तरम् ऊष्माणं तापम् उपजनयन्ती उत्पादयन्ती अपि जाड्यं जडतां उपजनयति उत्पादयति। सा लक्ष्मीः उन्नतिम् उच्छ्रायम् आदधाना धारयन्ती अपि नीचस्वभावतां निम्नप्रकृतित्वम् आविष्करोति प्रकाशयति। तोयराशिसम्भवा अपि तोयराशेः समुद्रात् संभवः उत्पत्तिः यस्याः सा तादृशी लक्ष्मीः तृष्णां पिपासां संवर्धयति समेधयति। ईश्वरतां शिवत्वम् आदधाना धारयन्ती अपि अशिवप्रकृतित्वं शिवभिन्नस्वभावत्वम् आतनोति। बलोपचयं शक्तिवृद्धिम् आहरन्ती आनयन्ती अपि लघिमानं लघुत्वम् आपादयति निष्पादयति।

अमृतसहोदरापि कटुकविपाका। अमृतसहोदरा अमृतस्य पीयूषस्य सहोदरा सोदर्या अपि कटुकविपाका कटुकः जिह्वाकटुः विपाकः रसः यस्याः सा। लक्ष्म्याः समुद्रादुत्पत्या अमृतसोदसत्वेऽपि कथं कटुकविपाकत्वमिति विरोधः, कटुकः दुःखदायकः, विपाकः परिणामः, यस्याः सा इति परिहारः। अत एवोक्तं च -

"अर्थानामर्जने दुःखमर्जितानां च रक्षणे।

आये दःखं व्यये दुःखं धिगर्थात्कष्टसंश्रयात्।।"इति।

सा लक्ष्मीः विग्रहवती अपि मूर्तिमती अपि अप्रत्यक्षदर्शना अप्रत्यक्षम् निरिन्द्रियागोचरम् दर्शनं विलोकनं यस्याः सा। सा लक्ष्मीः पुरुषोत्तमरता पुरुषोत्तमेषु उत्तमपुरुषेषु रता आसक्ता अपि खलजनप्रिया खलजनाः दुर्जनमानवाः प्रियाः अभीष्टाः यस्याः सा तथा भवति। अत्रापि विरोधः। लक्ष्मीः पुरुषोत्तमे श्रीविष्णौ, रता आसक्ता खलजनप्रिया इति परिहारः। सा लक्ष्मीः रेणुमयी इव धूलिमयी इव रजोगुणमयी इव वा स्वच्छं निर्मलम् अपि कलुषीकरोति मलिनीकरोति। यथा यथा चेयं चपला दीप्यते तथा तथा दीपशिखेव कज्जलमलिनमेव कर्म केवलमुद्वमति। चपला चञ्चला इयं लक्ष्मीः यथा यथा येन येन प्रकारेण दीप्यते प्रस्फुरति, तथा तथा तेन तेन प्रकारेण दीपशिखा प्रदीपज्वाला इव कज्जलमलिनं कज्जलम् अञ्जनम् इव मलिनं मलीमसं कर्म क्रियाम् अभक्ष्यभक्षणादिकं वा उद्वमति उद्गिरति। यथा दीपशिखा कज्जलमेव मलिनं वस्तु वमति तथैवैयं लक्ष्मीः कज्जलमलिनं दुष्कर्मादिकमुत्पादयतीति तात्पर्यम्।

## सरलार्थः -

देव्या सरस्वत्या स्वीकृतान् विदुषः ईर्ष्यया लक्ष्मीः न स्वीकरोति। सा च पुनः गुणसम्पन्नम् अपवित्रमिव न स्पृशति, उदारस्वभावसम्पन्नं जनं अमाङ्गलिकमिव अधिकतया न मन्यते, सज्जनं लक्षणरहितमिव न पश्यति, कुलीनं पुरुषं सर्पमिव त्यजति, शूरं जनं कण्टकमिव परित्यज्य गच्छति, ये दातारः भवन्ति तान् दुःस्वप्नमिव न कदापि स्मरति। यः मनुष्यः विनययुक्तः सः पापी इति मत्वा तस्य



समीपं लक्ष्मीः न याति। सा मनस्विनं पुरुषम् उन्मत्तमिव मत्वा हसति। इन्द्रजालं यथा वास्तविकजगतः भिन्नम्। एवमेव लक्ष्मीः अपि इन्द्रजालमिव जगति परस्परविरुद्धं स्वं चरित्रं प्रदर्शयति। धनतेजः मूर्खता च अत्यन्तं विरुद्धम्। सा प्रतिक्षणं ऊष्माणं नाम धनतेजः जनयन्ती परन्तु सममेव अत्यन्तविरुद्धं जाड्यमपि उत्पादयति। उन्नत्या मनसि उदारता आगच्छति। परन्तु अनया उन्नतिः लभ्यते परन्तु विरुद्धस्वभावयुता नीचस्वभावतापि प्राप्यते। इयं लक्ष्मीः समुद्रात् समुत्थिता परन्तु तृष्णां वर्धयति। ईश्वरभावं नाम मङ्गलपरिसरं विस्तारयति परन्तु सममेव अमाङ्गलिकीं प्रकृतिमपि प्रसारयति। शक्तेः वर्धनाय शिक्षयति, परन्तु सममेव तुच्छत्वमपि वर्धयति। सा अमृतस्य सहोदरा परन्तु कटु नाम अनिष्टस्य कारणस्वरूपा। इयं विग्रहसम्पन्ना नाम कलहयुता परन्तु अस्याः प्रत्यक्षं न भवति। सा लक्ष्मीः पुरुषोत्तमे नाम भगवति वासुदेवे आसक्ता परन्तु दुर्जनानां प्रिया। सा रेणुमयी नाम रजोगुणसम्पन्ना परन्तु निर्मलमपि जनं मलिनीकरोति। सा यथा यथा प्रकाशिता भवति तथा तथा दीपस्य शिखा यथा अञ्जनं प्रकाशयति एवमेव मलिनं कर्म प्रकटयति।

**व्याकरणविमर्शः -**

**क) समासः -**

१. सरस्वतीपरिगृहीतम् - सरस्वत्या परिगृहीतं सरस्वतीपरिगृहीतम् इति तृतीयातत्पुरुषसमासः।

२. अमृतसहोदरा - अमृतस्य सहोदरा अमृतसहोदरा इति षष्ठीत्पुरुषसमासः।

## अलङ्कारविमर्शः

१. सरस्वतीपरिगृहीतम् इत्यस्मिन् वाक्ये लक्ष्म्याः ईर्ष्यागुणसम्भावनाद् गुणोत्प्रेक्षालङ्कारः। किञ्च, स्त्रीलिङ्गद्वारा सपत्नीव्यवहारसमारोपात् समासोक्तिः अलङ्कारः। तल्लक्षणं दर्पणे -

"समासोक्तिः समैर्यत्र कार्यलिङ्गविशेषणैः।

व्यवहारसमारोपः प्रस्तुतेऽन्यस्य वस्तुनः।।" इति। अत्र गुणोत्प्रेक्षायाः समासोक्तेश्च अङ्गाङ्गिभावेन सङ्करालङ्कारः।

२. मनस्विनमित्यस्मिन् वाक्ये परस्परविरुद्धम् इत्यस्मिन् च वाक्ये उत्प्रेक्षालङ्कारः।

३. उन्नतिमित्यस्मिन् वाक्ये औनत्ये अपि नीचस्वभावताया विरुद्धत्वावभासाद् विरोधाभासाऽलङ्कारः। एवमेव ईश्वरतामित्यस्मिन् वाक्ये, बलोपचयमित्यस्मिन् वाक्येऽपि च विरोधाभासाऽलङ्कारः।

## पाठगतप्रश्नाः- ३

२०. लक्ष्मीः कम् ईर्ष्यया नालिङ्गति?

२१. श्रीः कम् अमङ्गलमिव मन्यते?

२२. लक्ष्मीः कम् अनिमित्तमिव न पश्यति?



२३. श्रीः कम् अपवित्रमिव न स्पृशति?

२४. लक्ष्मीः कं दुःस्वप्नमिव न स्मरति?

२५. श्रीः जगति कीदृशं निजं चरितं दर्शयति?

२६. उन्नतिमादधानापि लक्ष्मीः किम् आविष्करोति?

२७. लक्ष्मीः किंप्रकृतित्वम् आतनोति?

२८. श्रीः केषां प्रिया?

२९. किमिव मलिनं कर्म उद्वमति?

३०. श्रीः किं वर्धयति?

## १७.४) साम्प्रतं मूलपाठम् अवगच्छाम – ९

**तथाहि इयं संवर्धनवारिधारा तृष्णाविषवल्लीनाम्, व्याधगीतिरिन्द्रियमृगाणाम्, परामर्शधूमलेखा सच्चरितचित्राणाम्, विभ्रमशय्या मोहदीर्घनिद्राणाम्, निवासजीर्णवलभी धनमदपिशाचिकानाम्, तिमिरोद्गतिः शास्त्रदृष्टीनाम्, पुरःपताका सर्वाविनयानाम्, उत्पत्तिनिम्नगा क्रोधावेगग्राहाणाम्, आपानभूमिर्विषयमधूनाम्, सङ्गीतशाला भ्रूविकारनाट्यानाम्, आवासदरी दोषाशीविषाणाम्, उत्सारणवेत्रलता सत्पुरुषव्यवहाराणाम्, अकालप्रावृड् गुणकलहंसकानाम्, विसर्पणभूमिर्लोकापवादविस्फोटकानाम्, प्रस्तावना कपटनाटकस्य, कदलिका कामकरिणः, वध्यशाला साधुभावस्य, राहुजिह्वा धर्मेन्दुमण्डलस्य। न हि तं पश्यामि, यो ह्यपरिचितया अनया न निर्भरमुपगूढः। यो वा न विप्रलब्धः। नियतमियमालेख्यगतापि चलति, पुस्तमय्यपीन्द्रजालमाचरति, उत्कीर्णापि विप्रलभते, श्रुताप्यभिसंधत्ते, चिन्तितापि वञ्चयति।**

**व्याख्यानम् -**

इयं लक्ष्मीः तृष्णाविषवल्लीनां तृष्णाः विषयस्पृहाः एव विषवल्ल्यः गरललताः तासां संवर्द्धनवारिधारा विस्तारणजलसन्ततिः। लक्ष्मीः हि उत्तरोत्तरं विषयस्पृहां वर्धयति।

इयं लक्ष्मीः इन्द्रियमृगाणाम् इन्द्रियाणि हृषीकाणि एव मृगाः हरिणाः तेषां व्याधगीतिः लुब्धकगानम्। यथा व्याधो गीतेन मृगान् वशमानीय तान् नाशयति तथैव इयमपि इन्द्रियाणि विषयाभिमुखानि विधाय जनान् नाशयति।

इयं लक्ष्मीः सच्चरितचित्राणां सच्चरितानि सुवृत्तानि एव चित्राणि आलेख्यानि तेषां परामर्शधूमलेखा परामर्शाय प्रोञ्छनाय धूमलेखा वह्निध्वजपङ्क्तिः। यथा धूमलेखा चित्रं मलिनीकरोति, तथैव लक्ष्मीरपि चरितं कलुषयति।

इयं लक्ष्मीः मोहदीर्घनिद्राणां मोहाः विवेकराहित्यानि एव दीर्घनिद्राः तासां विभ्रमशय्या विलासशय्या। एषा हि मोहं परिवर्धयति।

इयं लक्ष्मीः धनमदपिशाचिकानां धनमदाः अर्थोन्मत्तताः एव पिशाचिकाः पिशाचजतीयाः स्त्रियः तासां निवास-जीर्णवलभी निवासाय अवस्थानाय जीर्णवलभी पुरातनं भवनम्। यथा जीर्णगृहेष्वेव पिशाचानाम् अवस्थानं तथा लक्ष्म्याः सत्त्वे धनमदो भवत्येव।

इयं लक्ष्मीः शास्त्रदृष्टीनां शास्त्राणि वेदादिशास्त्राणि एव दृष्टयः लोचनानि येषां तेषां शास्त्रैकचक्षुष्काणां तिमिरोद्गतिः तिमिरस्य नयनरोगविशेषस्य उद्गतिः उद्गमः। तिमिररोगः नेत्रयोर्दर्शनशक्तिः यथा नाशयति लक्ष्मीः अपि शास्त्रज्ञानं नाशयति।

इयं लक्ष्मीः सर्वाऽविनयानां सर्वेषां समस्तानाम् अविनयानाम् औद्धत्यानां पुरःपताका अग्रवैजयन्ती ध्वजा। लक्ष्मीरेव सर्वेषाम् अविनयानां कारणम्।

इयं लक्ष्मीः क्रोधावेगग्राहाणां क्रोधस्य कोपस्य आवेगाः संभ्रमाः एव ग्राहाः अवहाराः तेषाम् उत्पत्ति-निम्नगा नदी। यथा नद्यां ग्राहा उत्पद्यन्ते, तथैव कोपसंभ्रमान् लक्ष्मीः जनयति।

इयं लक्ष्मीः विषयमधूनां विषयाः स्रक्चन्दनवनितादिभोग्यपदार्थाः एव मधूनि मद्यानि, तेषाम् आपानभूमिः पानगोष्ठीस्थलम्। यदा लक्ष्मीः तिष्ठति तदा एव विषयभोगासक्तिः भवति।

इयं लक्ष्मीः भ्रूविकारनाट्यानां भ्रूविकाराः भ्रूभङ्गाः एव नाट्यानि नर्तनानि तेषां संगीतशाला रङ्गशाला।

इयं लक्ष्मीः दोषाशीविषाणां दोषाः कामक्रोधादयः एव आशीविषाः भुजङ्गमाः, तेषाम् आवासदरी निवासगुहा। लक्ष्म्यां सत्यामेव कामक्रोधादयो दोषा उत्पद्यन्ते।

इयं लक्ष्मीः सत्पुरुषव्यवहाराणां सत्पुरुषाः शिष्टजनाः तेषां व्यवहाराणाम् आचरणानाम् उत्सारणवेत्रलता उत्सारणे अपसारणे दूरीकरणे वेत्रलता वेतसयष्टिः। यदा लक्ष्मीः तिष्ठति तदा शिष्टाचाराः विनष्टा भवन्ति।

इयं लक्ष्मीः गुणकलहंसकानां गुणाः दयादाक्षिण्यादयः एव कलहंसकाः कादम्बाः तेषाम्, अकालप्रावृट् अकाले असमये एव प्रावृट् वर्षा। वर्षासु हंसा नश्यन्तीति प्रायोवादः। एवमेव लक्ष्मीः दयादाक्षिण्यादीन् गुणान् नाशयति।

इयं लक्ष्मीः लोकापवादविस्फोटकानां लोकापवादाः जनाक्षेपाः एव विस्फोटकाः पिटकाः तेषां विसर्पणभूमिः विस्तरणस्थलम्। लक्ष्मीसत्त्वे एव कुकर्मवशाद् अनेके अपवादा जायन्ते।

इयं लक्ष्मीः कपटनाटकस्य कपटं छद्माचरणम् एव नाटकं रूपकविशेषः तस्य प्रस्तावना आमुखम्। लक्ष्म्यां स्थितायामेव नानाविधं कपटाचरणं कुर्वन्ति जनाः।

इयं लक्ष्मीः कामकारिणः कामः मन्मथः मदः मदनः वा एव करी हस्ती तस्य कदलिका रम्भा। यथा कदलीसमूहे गजाः सानन्दं विहरन्ति एवमेव लक्ष्मीः तिष्ठति चेद् अनेकविधा मन्मथविकारा जनानां जायन्ते।

इयं लक्ष्मीः साधुभावस्य सज्जनत्वस्य वध्यशाला हननशाला। लक्ष्मीः तिष्ठति चेत् मनुष्याः साधुत्वं त्यजन्ति।

इयं लक्ष्मीः धर्मेन्दुमण्डलस्य धर्मः पुराणम् एव इन्दुमण्डलं चन्द्रबिम्बं तस्य, राहुजिह्वा सिंहीकागर्भसम्भूतस्य राहोः रसना। लक्ष्मीः भवति चेदेव सुकृताचरणस्य लोपो भवति।

हि निश्चितं तं तादृशं नरं पश्यामि नो विलोकयामि, यः नरः अपरिचितया परिचयरहितया अनया लक्ष्म्या निर्भरं गाढं न उपगूढः न आलिङ्गितः। यो वा नरः अनया लक्ष्म्या न विप्रलब्धः नो वञ्चितः। लक्ष्मीः कुलटेव सर्वत्र सम्बन्धं विदधाति सर्वान् च प्रतारयति।

इयं लक्ष्मीः नियतं निश्चितम् आलेख्यगता चित्रस्थिता अपि चलति गच्छति स्थिरा न भवति। पुस्तमयी मृदादिविनिर्मितपुत्तलिकारूपा अपि इन्द्रजालं कुहकम् आचरति विदधाति।

इयं लक्ष्मीः उत्कीर्णा प्रस्तरादौ उल्लिखिता अपि विप्रलभते विसंवदति, श्रुता आकर्णिता अपि अभिसन्धत्ते अनुसन्दधाति, चिन्तिता ध्याता अपि वञ्चयति प्रतारयति।

## सरलार्थः -

सा लक्ष्मीः यथा तृष्णारूपविषलतानां वर्धनकर्त्री जलधारा एवमेव इन्द्रियरूपमृगानाम् आकर्षणकर्त्री व्याधगीतिरिव। धूमो यथा आदर्शम् आवृणोति मलिनीकरोति वा, एवमेव सा अपि उत्तमचरित्रसम्पन्नं जनम् आवृणोति कलुषयति वा। मोहरूपदीर्घनिद्रासम्पन्नानां कृते विलासशय्या इव। धनमदलोलुपानां पिशाचिनां कृते सा निवासक्षमा गुहा इव। येषां दृष्टिः शास्त्रानुसारं प्रवर्तते तेषां कृते तिमिरनामकः नेत्ररोगः। सा एव समेषाम् औद्धत्यानाम् अग्रवैजयन्ती नाम हेतुः। यथा नद्यां ग्राहाः नाम अवहाराः उत्पद्यन्ते एवमेव ये कोपावेगविष्टाः ते लक्ष्म्यामेव जायन्ते। सा शब्दस्पर्शादिविषयमदिरायाः पानभूमिः। अर्थात् लक्ष्म्यां विषयभोगासक्तिः भवति। इयं भ्रूभङ्गनाट्यस्य सङ्गीतशाला। दोषरूपभुजङ्गस्य इयम् आवासगुहा। सताम् आचरणम् अपसारयितुम् इयं वेत्रयष्टिः। अर्थात् लक्ष्म्यां शिष्टाचाराः नश्यन्ति। इयं गुणराजहंसस्य अकालवृष्टिः इव। अर्थाद् इयं गुणानां विनाशकारणम्। एषैव लोकापवादस्य विस्तरणस्थलम्। अर्थात् अत्रैव कुकर्माचरणं वर्तते। अस्यामेव कपटाचरणं भवति। कदली गजाय अत्यन्तं रोचते। कामदेवगजस्य इयं कदलीस्वरूपा। अर्थात् अस्यां बहुविधाः कामविकाराः जायन्ते। सताम् इयं वध्यभूमिः। राहोः प्रभावेण चन्द्रस्य ग्रहणं जायते। इयं धर्मचन्द्रस्य राहुजिह्वा इव। अर्थात् एनया सतां सदाचरणं लुप्यते। पुंश्चली यथा समैः सह सम्बन्धं स्थापयति, सर्वान् आलिङ्गति, न कमपि वञ्चयति। एवं लोके न कश्चन तथाविधः वर्तते यः लक्ष्म्या न आलिङ्गितः, न वा कश्चन तथा यः एनया वञ्चितः। इयं चित्रस्थितापि चलति नाम अस्थिरा। ऐन्द्रजालिका इव सहसा विलीयते। प्रस्तरादौ लिखितापि सा विसंवदति। इयं श्रुता परन्तु पुनरपि अनुसन्दधाति। सा आराधिता सती अपि आराधकं प्रतारयति।

## व्याकरणविमर्शः

१. व्याधगीतिः- व्याधस्य गीतिः व्याधगीतिः इति षष्ठीतत्पुरुषसमासः।

२. इन्द्रियमृगाणाम्- इन्द्रियाणि एव मृगाणि इन्द्रियमृगाणि इति कर्मधारयसमासः, तेषाम् इन्द्रियमृगाणाम्।

३. धनमदपिशाचिकानाम्- धनमदाः एव पिशाचिकाः इति कर्मधारयसमासः, तासाम् धनमदपिशाचिकानाम् इति षष्ठीतत्पुरुषसमासः।

४. शास्त्रदृष्टीनाम् - शास्त्राणि एव दृष्टयः येषां ते शास्त्रदृष्टयः इति बहुव्रीहिसमासः, तेषाम् इति।

**अलङ्कारविमर्शः**

१. पुरःपताका सर्वाविनयानाम् इत्यत्र उत्सारणवेत्रलता सत्पुरुषव्यवहाराणाम् इत्यत्र च केवलं रूपकम्।

२. न हि तं पश्यामीत्यादिवाक्ये लक्ष्मीः कुलटेव सर्वत्र सम्बन्धं विदधाति इत्यतः लक्ष्म्यां कुलटाव्यवहारसमारोपात् समासोक्त्यलङ्कारः।

३. चिन्तितापि वञ्चयतीत्यत्र परस्परविरुद्धस्य युगपत् आभासेन विरोधाभासालङ्कारः।

**कोशः**

१. "वल्ली तु व्रततिर्लता" इत्यमरवचनाद् वल्ली, व्रततिः, लता इत्येते समार्थकाः।

२. "दरी तु कन्दरो वा स्त्री देवखातबिले गुहा" इत्यमरोक्तेः दरी, कन्दरः, देवखातम्, बिलम्, गुहा इत्येते समार्थकाः शब्दाः।

## पाठगतप्रश्नाः- ४

१. तृष्णाविषवल्लीनां श्रीः कीदृशी?

२. सच्चरितचित्राणां लक्ष्मीः कीदृशी?

३. महादीर्घनिद्राणां श्रीः किम्भूता?

४. शास्त्रदृष्टीनां लक्ष्मीः कीदृशी?

५. भ्रूविकारनाट्यानां श्रीः किंरूपा?

६. गुणकलहंसकानां लक्ष्मीः कीदृशी?

७. साधुभावस्य श्रीः कीदृशी?

८. राहुजिह्वा इव लक्ष्मीः कस्य नाशिका?

९. श्रीः किम्भूतापि विप्रलभते?

१०. लक्ष्मीः चिन्तितापि किं करोति?

## पाठसारः

श्रियः कामये हि यतन्ते समे लोकाः। परन्तु तस्याः दुश्चरितम् अस्माभिः अवश्यमेव आदौ ज्ञेयम्। शुकनासः प्रस्तुतेऽस्मिन् तथाभूतायाः श्रियः स्वरूपं प्रकाशयति। बहुविधं चाञ्चल्यं मोहिनी शक्तिश्च अस्यां वर्तते। सा क्षणाभ्यन्तरे पुरुषात् पुरुषान्तरं व्रजति। सा पुरुषमेकं प्रीयमाणा पुरुषान्तरम् आलिङ्गति। कस्यापि समीपे चिराय न तिष्ठति। तिष्ठन्ती अपि सा दुःखेन रक्षणीया। बहुविधबलसहायेनापि तस्याः बन्धनम् असम्भवम्। तस्याः एवं मोहिनी शक्तिः यत् तस्याः प्रभावेण जनः स्वस्य परिचयं विस्मरति, कुलपरम्पराम् अन्यथाकरोति, स्वीयः आत्मीयः परकीयः इति प्रतीयते। अस्याः माहात्म्येन धर्मानुचरणं नश्यति, त्यागदयादाक्षिण्यादिसद्गुणाः विलीयन्ते, सत्यभाषणं कथामात्रावशेषं तिष्ठति। कदापि सा धनरत्नादिभिः समृद्धं करोति कदापि असिधारायां स्थित्वा समूलम् उन्मूलयति। अविश्वासनीया इयं लक्ष्मीः। गङ्गा इवेयं समस्तलोकानां जननी पालयित्री परन्तु जलबुद्बुदचञ्चला अर्थात् प्रतिपदम् अस्थिरा।

बलवन्तः धूर्ताः कपटाश्च तस्याः प्रियाः अप्रियाश्च सज्जनाः। हिडिम्बा यथा बलं वीक्ष्य भीमं वृतवती एवं यः साहसिकः तम् आत्मीयं करोति। प्रतिपदम् अन्यं पुरुषम् उन्मादयति तां ग्रहीतुम्। विद्यते च तस्याः विद्वेषः गुणवतः विदुषः प्रति। उदारचरितं सा अमङ्गलम् इव मन्यते, सज्जनम् अप्रयोजनमिति कृत्वा स्वीकरोति। पद्मस्य कण्टकं यथा अस्माभिः परिह्रियते एवं सापि वीरहृदयं पुरुषं कण्टकमिव परित्यजति। दुःस्वप्नः यथा अस्माभिः पुनः न इष्यते तथा ये दातारः वर्तन्ते न ते तया आद्रियन्ते।

अवर्णनीयेयं श्रीः। ऐन्द्रजालिकः यथा परस्परविरुद्धम् इन्द्रजालद्वारा दर्शयति एवम् इयमपि परस्परविरुद्धं विषयं युगपत् सम्बध्नाति। सा उन्नत्यै प्रचोदयति परन्तु सममेव आलस्यं दीर्घसूत्रतां निद्रादितमोगुणं जनयति। विषयभोगस्य आकाङ्क्षां निवारयितुं धनादिकं ददाति परन्तु पुनः प्राप्तये तृष्णामपि वर्धयति। श्रीविष्णौ रता परन्तु तां खलाः कपटाः प्रार्थयन्ति। अन्धकारप्रकोष्ठे दीपशिखा प्रज्वाल्यते चेत् सा तत्रस्थं वस्तु यथावभासयति श्रीः अपि स्वकीयं कुकर्म प्रकटयति।

विलक्षणस्वभावेयं लक्ष्मीः। पयस्सिञ्चनेन वृक्षस्य वर्धनं भवति। इयं विषयरूपान् विषवृक्षान् वर्धयन्ती जलधारा इव। धूमः यथा दर्पणम् आवृणोति एवम् इयमपि सज्जनानां चरितम् आवृणोति। धनमदलोलुपान् सा प्रबोधयति प्रबाधयति च शास्त्रविधिमनुसृत्य प्रवर्तितान्।

सतां नाशयित्री इयम्। यथा अकाले वृष्टिपतनेन राजहंसः म्रियते एवमेव अस्याः प्रभावेण गुणवन्तः नाशं प्राप्नुवन्ति। वेत्राघातैः यथा कस्यापि निःसरणं भवति, इत्थम् इयं वेदविहितव्यवहारान् अपसारयति। राहुजिह्वा यथा चन्द्रम् उदरीकरोति, इयमपि धर्मचन्द्रं लोपयति। गणिका यथा सर्वान् पुरुषान् प्रीणाति आलिङ्गति च परन्तु न कमपि परित्यजति एवमेव श्रीः अपि सर्वान् मोहयति न कमपि स्वमोहबन्धात् दूरं निक्षिपति।

श्रीः मनुष्यान् जाड्यमान्द्यादिगुणविशिष्टान् विदधाति। सा मानवान् प्रतिपदम् अधो पातयति। अतः अस्याः श्रियः सावधानं स्थेयम्। भोगवासनादिकं परित्यज्य राज्यस्य रक्षणं विधेयमिति मन्त्री उपदिशति पाठेऽस्मिन्।

## पाठान्तप्रश्नाः

१. श्रियः उत्पत्तिरहस्यं वर्णयत।

२. श्रियः स्वभावं सविस्तारं प्रतिपादयत।

३. जगति श्रियः परस्परविरुद्धं चरितं सविस्तारं ग्रन्थमाधारीकृत्य प्रमाणीकुरुत।

४. लक्ष्म्याः असत्प्रियत्वं सद्द्वेष्यत्वञ्च प्रतिपादयत।

५. कान् प्रति लक्ष्म्याः स्नेहादरादिकं नास्ति वर्णयत।

६. श्रियः दुश्चरितं वर्णयत।

## पाठगतप्रश्नोत्तराणि

१. लक्ष्मीः क्षीरसागरात् पारिजातपल्लवेभ्यः रागं स्वीकृतवती।

२. श्रीः उच्चैःश्रवसः चञ्चलतां शिक्षितवती?

३. लक्ष्मीः कौस्तुभमणेः नैष्ठुर्यं ज्ञातवती?

४. मोहनशक्तिः श्रिया कालकूटात् शिक्षिता?

५. लक्ष्मीः क्षीरसागरात् पारिजातपल्लवेभ्यः रागं गृहीत्वैवोद्गता।

६. आलोकयतु तावत् कल्याणाभिनिवेशी लक्ष्मीमेव प्रथमम्।

७. स्तम्भमेलनम् -

| स्तम्भः - १ | स्तम्भः - २ |
|---|---|
| क) रागम् | पारिजातपल्लवेभ्यः |
| ख) वक्रताम् | इन्दुशकलात् |
| ग) चञ्चलताम् | उच्चैःश्रवसः |
| घ) मोहनशक्तिम् | कालकूटात् |
| ङ) मदम् | मदिरायाः |
| च) नैष्ठुर्यम् | कौस्तुभमणेः |

८. कालकूटात् मोहनशक्तिम् इति सन्धिविच्छेदः।

९. लक्ष्मीः दुःखेन परिपाल्यते।

१०. पिञ्जरविधृतापि उपक्रामति।

११. श्रीः परिचयं न रक्षति।

१२. सम्पत् कुलक्रमं न अनुवर्तते।

१३. धर्मं न अनुरुध्यते।

१४. विशेषज्ञतां न विचारयति लक्ष्मीः।

१५. विविधगन्धगजगण्डमधुपानमत्ता इव परिस्खलति श्रीः।

१६. श्रिया विश्वरूपं ग्रहीतुं नारायणमूर्तिः आश्रिता।

१७. श्रीः पातालगुहा इव तमोबहुला।

१८. दुष्टपिशाची इव अपरपुरुषान् उन्मत्तीकरोति।

१९. स्तम्भमेलनम् -

| स्तम्भः - १ | स्तम्भः - २ |
|---|---|
| क) न रक्षति | परिचयम् |
| ख) न ईक्षते | अभिजनम् |
| ग) न आलोकयते | रूपम् |
| घ) न अनुवर्तते | कुलक्रमम् |
| ङ) न पश्यति | शीलम् |
| च) न गणयति | वैदग्ध्यम् |
| छ) न आकर्णयति | श्रुतम् |
| ज) न अनुरुध्यते | धर्मम् |
| झ) न आद्रियते | त्यागम् |
| ञ) न विचारयति | विशेषज्ञताम् |
| ट) न पालयति | आचारम् |
| ठ) न प्रमाणीकरोति | लक्षणम् |

२०. लक्ष्मीः सरस्वतीपरिगृहीतम् ईर्ष्यया नालिङ्गति।

२१. श्रीः उदारसत्त्वम् अमङ्गलमिव मन्यते।

२२. लक्ष्मीः सुजनम् अनिमित्तमिव न पश्यति।

२३. श्रीः गुणवन्तम् अपवित्रमिव न स्पृशति।

२४. लक्ष्मीः दातारं दुःस्वप्नमिव न स्मरति।

२५. श्रीः जगति परस्परविरुद्धं निजं चरितं दर्शयति।

२६. उन्नतिमादधानापि लक्ष्मीः नीचस्वभावताम् आविष्करोति।

२७. लक्ष्मीः अशिवप्रकृतित्वम् आतनोति।

२८. श्रीः खलजनानां प्रिया।

२९. दीपशिखा इव मलिनं कर्म उद्वमति।

३०. श्रीः तृष्णां वर्धयति।

३१. तृष्णाविषवल्लीनां श्रीः संवर्द्धनवारिधारा।

३२. सच्चरितचित्राणां लक्ष्मीः परामर्शधूमलेखा।

३३. महादीर्घनिद्राणां श्रीः विभ्रमशय्या।

३४. शास्त्रदृष्टीनां लक्ष्मीः तिमिरोद्गतिः?

३५. भ्रूविकारनाट्यानां श्रीः सङ्गीतशाला।

३६. गुणकलहंसकानां लक्ष्मीः अकालप्रावृट् इव।

३७. साधुभावस्य श्रीः वध्यशाला।

३८. राहुजिह्वा इव लक्ष्मीः धर्मेन्दुमण्डलस्य नाशिका।

३९. श्रीः उत्कीर्णा अपि विप्रलभते।

४०. लक्ष्मीः चिन्तितापि वञ्चयति।

॥ इति सप्तदशः पाठः ॥

१८

# शुकनासोपदेशः - लक्ष्मीदुष्प्रभावः- १

## प्रस्तावना

अस्मिन् पाठे शुकनासोपदेशस्य 'एवंविधयापि चानया' इत्यतः आरभ्य 'सर्वजनस्योपहास्यतामुपयान्ति' इत्यन्तः अंशः वर्ण्यते। लोभः पापस्य कारणम्। दुर्लभा इयं श्रीः इति भावयन्तः राजानः प्रतिपदं तस्याः प्राप्तये यतन्ते। जीर्णवेगाः अपि ते भोगविलासम् अतिक्रामितुम् अलम्। तदुपरि दुर्जनैः सह साङ्गत्यं तान् ततोऽधिकं पातयति। सदुपदेशाग्राहिणां राज्ञां स्वार्थैकमनाः कुटिलाः मन्त्रिणः तान् अनैतिके कर्मणि प्रचोदयन्ति। ते परानुकरणपरस्त्रीगमनाद्यसदाचरणमेव सदाचरणमिति मन्यन्ते। तेन ते राजानः प्रजानां सुखदुःखादिकं न पश्यति परन्तु स्वेषामेव भोगसुखादिकं परिलक्षयन्ति। एवम्भूतेन आचरणेन ते विपद्गामिनः विपथगामिनश्च भवन्तीति मन्त्रिणः उपदेशः प्रतिपाद्यते प्रस्तुतेऽस्मिन् पाठे।

## उद्देश्यानि

अमुम् पाठं पठित्वा भवान् -

- राजसभायां स्थितानां कुटिलजनानां मनोभावनां ज्ञातुं शक्नुयात्।
- कुटिलाः कथं राजानं वशीकुर्वन्ति इति जानीयात्।
- खलवाक्यानाम् अनुसरणेन राज्ञां हानिं जानीयात्।
- विमूढानां राज्ञां खलानुसारेण गुरोरुपेक्षादिकं निन्दनीयं कर्म जानीयात्।
- पाठस्थानां पदानाम् अन्वयार्थान् समासान् च जानीयात्।

## १८.१) साम्प्रतं मूलपाठम् अवगच्छाम – १०

**एवंविधयापि चानया दुराचारया कथमपि दैववशेन परिगृहीता विक्लवा भवन्ति राजानः, सर्वाविनयाधिष्ठानताञ्च गच्छन्ति। तथाहि अभिषेकसमय एष चैषां मङ्गलकलशजलैरिव प्रक्षाल्यते दाक्षिण्यम्, अग्निकार्य्यधूमेनेव मलिनीक्रियते हृदयम्, पुरोहितकुशाग्रसम्मार्जनीभिरिव अपनीयते क्षान्तिः, उष्णीषपट्टबन्धेनेवावच्छाद्यते जरागमनस्मरणम्, आतपत्रमण्डलेनेवापसार्य्यते परलोकदर्शनम्, चामरपवनैरिवापह्रियते सत्यवादिता, वेत्रदण्डैरिवोत्सार्य्यन्ते गुणाः, जयशब्दकलकलरवैरिव तिरस्क्रियन्ते साधुवादाः ध्वजपटपल्लवैरिव परामृश्यते यशः।**

### व्याख्यानम् -

एवंविधया एतादृशया पूर्वमनेकप्रकारैर्वर्णितया अपि दुराचारया दुष्टाचरणया अनया लक्ष्म्या कथमपि केनापि प्रकारेण महता कष्टेन दैववशेन भाग्यवशेन परिगृहीताः स्वीकृताः राजानः भूपाः विक्लवाः विह्वलाः भवन्ति, ते च सर्वाऽविनयाधिष्ठानतां सर्वेषां सकलानाम्, अविनयानां दुर्मतीनाम्, अधिष्ठानताम् आश्रयतां च, गच्छन्ति प्राप्नुवन्ति।

अभिषेकसमये राज्याऽभिषेककाले एव मङ्गलकलशजलैः भद्रकुम्भसलिलैः इव एतेषां राज्ञां दाक्षिण्यं सर्वत्र समवर्तित्वं प्रक्षाल्यते विनाश्यते। अग्निकार्यधूमेन अग्निकार्यं हवनादि तस्य धूमेन वह्निध्वजेन हृदयं राज्ञश्चित्तं मलिनीक्रियते इव कलुषीक्रियते इव। पुरोहितकुशाग्रसम्मार्जनीभिः पुरोहितस्य पुरोधसः कुशाग्राणि दर्भाग्राणि एव सम्मार्जन्यः ताभिः क्षान्तिः राज्ञां क्षमा अपह्रियते इव अपनीयते इव। उष्णीषपट्टबन्धेन इव उष्णीषस्य मुकुटस्य पट्टबन्धः क्षौमवस्त्रबन्धनं तेन जरागमनस्मरणं राज्ञां वार्द्धक्यागतेः, स्मरणं स्मृतिः, आच्छाद्यते आव्रियते इव।

आतपत्रमण्डलेन छत्रमण्डलेन परलोकदर्शनं राज्ञां लोकान्तरज्ञानम् अपसार्यते दूरीक्रियते इव, चामरपवनैः प्रकीर्णकवातैः सत्यवादिता राज्ञां तथ्यभाषकत्वम् अपह्रियते विनाश्यते इव। वेत्रदण्डैः वेतसयष्टिभिः गुणाः शौर्यधैर्यादयः उत्सार्यन्ते दूरीक्रियन्ते इव। साधुवादाः हितवचनानि जयशब्दकलकलरवैः जयशब्दस्य राज्ञां जयपदस्य कलकलरवैः कोलाहलशब्दैः तिरस्क्रयन्ते अभिभूयन्त इव। यशः कीर्तिः ध्वजपटपल्लवैः राज्ञां ध्वजपटाः वैजयन्तीवस्त्राणि पल्लवानि किशलयानि तैः परामृश्यते अपमृज्यते इव।

### सरलार्थः -

इयं दुराचारिणी लक्ष्मीः यदि राजभिः कदापि दैवात् स्वीक्रियते तर्हि सर्वाः दुर्मतयः तान् आश्रयन्ति। तथाहि अभिषेकसमये मङ्गलकलशजलैः एषां राज्ञाम् उदारता प्रक्षाल्यते, हवनधूमेन चित्तं मलिनीक्रियते, पुरोहितस्य कुशाग्रभागरूपसम्मार्जन्या दयादाक्षिण्यक्षमासन्तोषादिगुणाः दूरीक्रियन्ते, मुकुटस्य पट्टबन्धनेन राज्ञां वार्धक्यगतेः स्मृतिः आच्छाद्यते, छत्रमण्डलेन तेषां परलोकज्ञानम् अपसार्यते, चामरैः सत्यकथनं निवर्त्यते, वेत्रदण्डैः धैर्यशौर्यादयः दूरं संस्थाप्यन्ते, जयशब्दादिकलरवैः हितवचनानि न श्रूयन्ते। यानि यशांसि नामानि राजस्तुतयः वर्तन्ते यथा राज्ञा इदं कार्यम्, इत्थं स्थेयम् इत्थमाचरणीयमित्यादीनि उत्तमराजचरितवर्णनरूपाः स्तुतयः यथा पत्रैः मलम् अपसार्यते तथैव राज्ञां ध्वजायाः वस्त्ररूपपत्रैः ते स्तुतयः अपसार्यन्ते। एवम्प्रकारेण लक्ष्मीः राजानं पीडयतीति शुकनासस्याशयः।

### व्याकरणविमर्शः -

**क) समासः**

१. उष्णीषपट्टबन्धेन - उष्णीषस्य पट्टबन्धः उष्णीषपट्टबन्धः इति षष्ठीतत्पुरुषसमासः, तेन उष्णीषपट्टबन्धेन इति।

२. चामरपवनैः - चामरस्य पवनैः चामरपवनैः इति षष्ठीतत्पुरुषः।

३. जयशब्दकलकलरवैः - जयशब्दस्य कलकलरवाः जयकलकलरवाः इति षष्ठीतत्पुरुषः, तैः जयशब्दकलकलरवैः इति।

**ख) सन्धिविच्छेदः**

१. मङ्गलकलशजलैरिव – मङ्गलकलसजलैः इव।

२. सम्मार्जनीभिरिवापह्रियते - सम्मार्जनीभिः इव अपह्रियते।

३. उष्णीषपट्टबन्धेनेवावच्छाद्यते - उष्णीषपट्टबन्धेन इव अवच्छाद्यते।

**अलङ्कारविमर्शः**

१. एवंविधया इत्यस्मिन् वाक्ये कार्यद्वारा लक्ष्म्यां पिशाचीत्वसमावेशात् समासोक्तिः अलङ्कारः।

२. अभिषेकसमये इत्यतः परामृश्यते इव इत्यस्मिन् वाक्ये प्रक्षालनादिक्रियाणाम् उत्प्रेक्षणात् क्रियोत्प्रेक्षालङ्कारः।

३. पुरोहितकुशाग्रसम्मार्जनीभिः इत्यस्मिन् वाक्ये पुरोहितकुशाग्रादीनां सम्मार्जन्यादिभिः अभेदप्रतिपादनाद् रूपकालङ्कारः। एवमत्र वाक्ये रूपकोत्प्रेक्षयोः सङ्करः।

**कोशः**

१. "हैमं छत्रं त्वातपत्रम्" इत्यमरवचनात् हैमम्, छत्रम्, आतपत्रम् इत्येते समार्थकाः शब्दाः।

२. "पताका वैजयन्ती स्यात्केतनं ध्वजमस्त्रियाम्" इत्यमरवचनात् पताका, वैजयन्ती, केतनम्, ध्वजम् इत्येते समार्थकाः शब्दाः।

३. "कलशस्तु त्रिषु द्वयोः। घटः कुटनिपावस्त्री" इत्यमरवचनात् कलशः, घटः, कुटः, निपः इत्येते समार्थकाः।

## पाठगतप्रश्नाः-१

१. दुराचारया लक्ष्म्या परिगृहीताः राजानः कीदृशाः भवन्ति?

२. अभिषेककाले केन इव राज्ञां दाक्षिण्यं प्रक्षाल्यते?

३. तेषां राज्ञां हृदयं केन मलिनीभवति?

४. राज्ञां क्षमागुणः केन अपसार्यते?

५. अभिषेकसमये राज्ञां वार्धक्यबुद्धिः केन दूरीभवति?

६. राज्ञां यशः अभिषेककाले केन परिमार्ज्यते?



## १८.२) साम्प्रतं मूलपाठम् अवगच्छाम - ११

**केचिच्छ्रम–वश–शिथिल–शकुनि–गल–पुट–चपलाभिः खद्योतोन्मेष–मुहूर्त–मनोहराभिर्मनस्विजनगर्हिताभिः सम्पद्भिः प्रलोभ्यमानाः, धन–लवलाभावलेपविस्मृतजन्मानोऽनेकदोषोपचितेन दुष्टासृजेव रागावेशेन बाध्यमानाः, विविधविषय–ग्रास–लालसैः पञ्चभिरप्यनेकसहस्रसंख्यैरिवेन्द्रियैरायास्यमानाः, प्रकृतिचञ्चलतया लब्धप्रसरेणैकेनापि सहस्रतामिवोपगतेन मनसा आकुलीक्रियमाणा विह्वलतामुपयान्ति। ग्रहैरिव गृह्यन्ते, भूतैरिवाभिभूयन्ते, मन्त्रैरिवावेश्यन्ते, सत्त्वैरिवावष्टभ्यन्ते, वायुनेव विडम्ब्यन्ते, पिशाचैरिव ग्रस्यन्ते। मदनशरैर्मर्म्माहता इव मुखभङ्गसहस्राणि कुर्वते, धनोष्मणा पच्यमाना इव विचेष्टन्ते, गाढप्रहाराहता इवाङ्गानि न धारयन्ति, कुलीरा इव तिर्य्यक् परिभ्रमन्ति, अधर्म्म–भग्नगतयः पङ्गव इव परेण सञ्चार्य्यन्ते, मृषावाद–विष–विपाक–सञ्जात–मुखरोगा इवातिकृच्छ्रेण जल्पन्ति, सप्तच्छद–तरव इव कुसुमरजोविकारैः पार्श्ववर्तिनां शिरःशूलमुत्पादयन्ति, आसन्नमृत्यव इव बन्धुजनम् अपि नाभिजानन्ति, उत्कुपित–लोचना इव तेजस्विनो नेक्षन्ते, कालदष्टा इव महामन्त्रैरपि न प्रतिबुध्यन्ते, जातुषाभरणानीव सोष्माणं न सहन्ते, दुष्टवारणा इव महामानस्तम्भनिश्चलीकृता न गृह्णन्त्युपदेशम्, तृष्णाविषमूर्च्छिताः कनकमयमिव सर्वं पश्यन्ति, इषव इव पानवर्द्धिततैक्ष्ण्याः परप्रेरिता विनाशयन्ति, दूरस्थितान्यपि फलानीव दण्डविक्षेपैर्महाकुलानि शातयन्ति, अकालकुसुमप्रसवा इव मनोहरकृतयोऽपि लोकविनाशहेतवः, श्मशानाग्नय इवातिरौद्रभूतयः, तैमिरिका इवादूरदर्शिनः, उपसृष्टा इव क्षुद्राधिष्ठितभवनाः, श्रूयमाणा अपि प्रेतपटहा इवोद्वेजयन्ति, चिन्त्यमाना अपि महापातकाध्यवसाया इवोपद्रवमुपजनयन्ति, अनुदिवसमापूर्य्यमाणाः पापेनेवाध्मातमूर्त्तयो भवन्ति, तदवस्थाश्च व्यसनशतशरव्यतामुपगता वल्मीकतृणाग्रावस्थिताः जलबिन्दव इव पतितमप्यात्मानं नावगच्छन्ति।**

### व्याख्यानम् -

केचिद् इत्यस्य विह्वलतामुपयान्ति इत्यन्तेन भागेन सह सम्बन्धः। केचिद् राजानः श्रम-वश-शिथिल-शकुनि-गल-पुट-चपलाभिः श्रमवशाद् आयासहेतोः शिथिलं श्लथं शकुनेः मयूरादिविहगस्य यत् गलपुटं कण्ठपुटं तद्वत् चपलाभिः चञ्चलाभिः, खद्योतोन्मेष-मुहूर्त-मनोहराभिर्मनस्विजनगर्हिताभिः खद्योतः ज्योतिरिङ्गणः तस्य उन्मेषः प्रकाशः स इव मुहूर्तं मनोहारिणीभिः चित्तहारिणीभिः मनस्विजनगर्हिताभिः ज्ञानिजननिन्दिताभिः सम्पद्भिः धनसम्पत्तिभिः प्रलोभ्यमानाः लोभं प्राप्यमाणाः विह्वलतां विक्लवताम् उपयान्ति उपगच्छन्तीति अन्वयः।

एवमेव केचिद् राजानः धनलवलाभावलेपविस्मृतजन्मानः धनलवस्य द्रव्यलेशस्य यो लाभः प्राप्तिः तेन यः अवलेपः अहङ्कारः, तेन विस्मृत विस्मरणं प्राप्तं जन्म जनुः येषां ते अत्यल्पधनावाप्त्यहङ्कारविस्मृतजनवः अनेकदोषोपचितेन अनेकदोषैः वातकफविकारैः उपचितेन वृद्धिं

प्राप्तेन दुष्टासृजा दुष्टेन रक्तेन यथा बाध्यमानाः पीड्यमानाः जनाः इव तथा रागावेशेन कामक्रोधादिना बाध्यमानाः पीड्यमाना विह्वलताम् उपयान्तीति अन्वयः।

विविधविषय-ग्रास-लालसैः विविधा अनेकप्रकारा ये विषयाः शब्दस्पर्शादयः तेषाम् उपभोगे लालसैः लोलुपैः पञ्चभिः पञ्चसंख्यकैः श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणाख्यैः इन्द्रियैः अपि अनेकसहस्रसंख्यैः विषयाणां बहुत्वाद् बहुसंख्यकैः इव इन्द्रियैः हृषीकैः आयास्यमानाः परिपीड्यमानाः केचिद् राजानः विह्वलताम् उपयान्ति इत्यन्वयः।

प्रकृतिचञ्चलतया प्रकृत्या स्वभावेन एव चञ्चलता चपलतया लब्धप्रसरेण प्राप्तावकाशेन एकेनापि एकसंख्यकेन अपि सहस्रता इव सहस्रभावम् इव उपगतेन प्राप्तेन मनसा चित्तेन आकुलीक्रियमाणाः व्यग्रीक्रियमाणाः सन्तः केचिद् राजानः विह्वलतां विक्लवताम् उपयान्ति उपगच्छन्ति।

राज्ञाम् अवस्थान्तराणि प्रतिपादयति कविः – ग्रहैरेव इव इति। केचिद् राजानः ग्रहैः शनैश्चरादिभिः गृह्यन्ते इव अनेकविकारावलोकनाद् आकृष्यन्ते इव, भूतैः देवयोनिविशेषैः अभिभूयन्ते इव तिरस्क्रियन्ते इव, मन्त्रैः वैदिकैः तान्त्रिकैर्वा आवेश्यन्ते इव वशीक्रियन्ते इव, सत्त्वैः शार्दूलप्रभृतिभिः हिंस्रप्राणिभिः वेदनावगमाद् अवष्टभ्यन्ते इव हठाद् गृह्यन्ते इव, वायुना वातव्याधिना विडम्ब्यन्ते इव इतस्ततो विक्षिप्यन्ते इव, पिशाचैः राक्षसादिभिः ग्रस्यते इव भक्ष्यन्त इव।

एवमेव राज्ञां स्थित्यन्तराणि वर्णयति - मदनेति। मदनशरैः कामबाणैः मर्म्माहता इव सन्धिस्थानेषु ताडिता इव मुखभङ्गसहस्राणि विवधप्रकारान् मुखभङ्गीन् कुर्वते विदधते, धनोष्मणा अर्थाभिमानसन्तापेन पच्यमानाः पाकविषयीक्रियमाणाः इव विचेष्टन्ते अनेकव्यापारान् कुर्वते, गाढप्रहाराहताः इव गाढप्रहारेण यष्ट्यादिकृतेन तीव्रीघातेन आहता ताडिता दृढाघातताडिताः इव अङ्गानि कायस्य अवयवान् हस्तपादादीन् न धारयन्ति न दृढं स्वयं वहन्ति केचिद् राजानः इत्यन्वयः।

कुलीराः कर्कटाः इव तिर्यक् कुटिलं परिभ्रमन्ति परिभ्रमणं कुर्वन्ति। अर्थाद् व्यवहारे कौटिल्यमाचरन्ति। अधर्म्मभग्नगतयः अधर्म्मेण पापाचारेण भग्ना विनाशं सम्प्राप्ता गतिः गमनं येषां ते तादृशाः सन्तः पङ्गवः पादेन खञ्जाः इव परेण अन्यजनेन सचिवादिना सञ्चार्यन्ते राजशासने प्रवर्त्यन्ते। पङ्गुपक्षे अधर्म्मगतयः इत्यस्य पापेन विनष्टगमनसामर्थ्याः इति, सञ्चार्यन्ते इत्यस्य च मित्रेण करग्रहणादिना गमनं कार्यन्ते इत्यर्थः। मृषावाद-विष-विपाक-सञ्जात-मुखरोगा मृषावादविपाकेन असत्यभाषण-परिणामेन सञ्जातः समुत्पन्नः मुखरोगः वदनव्याधिः येषां ते, तादृशा इव अतिकृच्छ्रेण अतिशयेन कष्टेन जल्पन्ति भाषन्ते। सप्तच्छदतरव इव सप्तपर्णवृक्षाः इव कुसुमरजोविकारैः पुष्परागविकृतिभिः राजपक्षे कुसुमानि नेत्ररोगाः ते एव रजोविकाराः रजोगुणपरिणामाः तैः पार्श्ववर्तिनां सन्निकृष्टानां जनानां शिरःशूलं मस्तकपीडाम् उत्पादयन्ति जनयन्ति। अर्थात् सप्तपर्णद्रुमा यथा पुष्परागविकारैः शिरःपीडां कारयन्ति तथैव केचिद् राजानः दुर्व्यवहारैः समीपस्थानां शिरःपीडां विदधति इति तात्पर्यम्।

आसन्नमृत्यव इव आसन्नः समीपवर्ती मृत्युः मरणं येषां तादृशा समासन्नमरणा इव बन्धुजनम् अपि स्वजनम् अपि न अभिजानन्ति न स्मरन्ति। आसन्नमृत्युजनपक्षे बुद्धिलोपात् स्वजनज्ञानं न भवति राजपक्षे अहङ्कारात् स्वजनज्ञानं न भवति।

उत्कुपितलोचना इव उत्कुपिते रुग्णे लोचने नयने येषां ते रुग्णनयनाः इव राजानः तेजस्विनः प्रतापवतः जनान् न ईक्षन्ते न पश्यन्ति। यथा नेत्ररोगो यस्यास्ति स जनः तेजस्विनः सूर्यादीन् न द्रष्टुं समर्थो भवति, तथा एते राजानः अहङ्कारवशात् ईर्ष्यया वा तेजस्विनः पुरषान् न पश्यन्ति। कालदष्टाः इव कालेन महाविषभुजङ्गमेन दष्टा लोका इव महामन्त्रैः षाड्गुण्यादिभिः अपि न प्रतिबुध्यन्ते बोधं न प्राप्नुवन्ति। यथा कालसर्पेण दष्टा जना गारुडादिमहामन्त्रैः प्रबोधं न यान्ति तथैव महाकालेन दष्टा षाड्गुण्यादिविषयैर्महामन्त्रैरपि बोधं न प्राप्नुवन्तीति तात्पर्यम्।

केचिद् राजानः जातुषाभरणानि लाक्षानिर्मितभूषणानि इव सोष्माणम् अग्निम् इव प्रतापशालिनं न सहन्ते नो मृष्यन्ति। यथा लाक्षानिर्मितानि द्रव्याणि अग्निसन्निधौ न तिष्ठन्ति द्रवीभावं गच्छन्ति तथैव राजानः अपि सोष्माणम् प्रतापवन्तं जनम् ईर्ष्यया न सहन्ते।

दुष्टवारणाः मन्दोन्मत्तगजाः इव महामानस्तम्भनिश्चलीकृताः महत् विशालम् मानं प्रमाणं यस्य सः तादृशो यः स्तम्भः आलानस्तम्भः तेन निश्चलीकृताः स्तब्धतां प्रापिताः सन्तः केचिद् राजानः उपदेशं हितैषिणाम् उपदिष्टं न गृह्णन्ति न स्वीकुर्वन्ति। अत्र महामानस्तम्भनिश्चली इति पदस्य राजपक्षे अर्थस्तावत् - महान् प्रचुरः मानः अहङ्कारः स एव स्तम्भः, तेन निश्चलीकृताः स्थिरीकृताः सन्तः इति। यथा मत्ता हस्तिनः हस्तिपकवचनं शृण्वन्ति तथैव राजानोऽपि हितैषिवचनं न गृह्णति।

तृष्णाविषमूर्च्छिताः तृष्णा अर्थस्पृहा इव विषं गरलं तेन मूर्च्छिताः मूर्च्छां प्राप्ताः इव राजानः सर्वं सकलं पदार्थं कनकमयं सुवर्णमयम् इव पश्यन्ति विलोकयन्ति।

इषवः बाणाः इव पानवर्द्धिततैक्ष्ण्याः पानेन मदिरासेवनेन वर्द्धितं वृद्धिं प्राप्तं तैक्ष्ण्यम् उग्रता येषां ते सुरासेवनवर्द्धितोग्रभावाः परप्रेरिताः परेण अन्येन प्रेरिताः प्रोत्साहताः सन्त विनाशयन्ति प्रजादीन् पीडयन्ति। परप्रेरिता इति पदस्य इषुपक्षे कामुकप्रेरिताः इति राजपक्षे धूर्तप्रोत्साहिताः सन्तः इत्यर्थः, एवमेव विनाशयन्ति इति पदस्य इषुपक्षे लक्ष्याणि नाशयन्ति इति राजपक्षे च प्रजादीन् पीडयन्ति इत्यर्थः।

दण्डविक्षेपैः यष्टिप्रहारैः दूरस्थितानि फलानि दूरे विद्यमानानि फलानि इव राजानः दण्डविक्षेपैः सामादिप्रयोगैः महाकुलानि प्रशस्तान् वंशान् शातयन्ति पीडयन्ति। शातयन्तीत्यस्य फलपक्षे पातयन्तीत्यर्थः।

राजानः अकाले अनवसरे कुसुमप्रसवाः इव पुष्पोद्गमाः इव मनोहरकृतयः सुन्दराकाराः अपि लोकविनाशहेतवः जनक्षयकारणभूताः, श्मशानाग्नयः इव प्रेतवनानलाः इव अतिरौद्रभूतयः अतिरौद्राः अत्यन्तभीषणाः भूतयः सम्पदः येषां ते तादृशाः, तैमिरिका इव तिमिरसंज्ञकेन नेत्ररोगेण आकान्ता इव अदूरदर्शिनः भाविदोषानवलोकिनः, उपसृष्टा इव उत्पादयुक्ता जना इव क्षुद्राधिष्ठितभवनाः क्षुद्रैः नीचजनैः अधिष्ठितम् आश्रितं भवनं निवसस्थानं येषां ते तादृशाः भवन्ति।

श्रूयमाणाः अपि आकर्ण्यमानसंज्ञका अपि प्रेतपटहाः मृतौ वाद्यमानढक्काशब्दा इव उद्वेजयन्ति उद्वेगं जनयन्ति। मृतशरीराणां पुरस्तात् पटहा इति वाद्यविशेषस्य वादनं भवति।

चिन्त्यमानाः अपि संयोगादौ का कथा चेतसि स्मर्यमाणाः अपि महापातकाध्यवसाया महापातकानां ब्रह्महत्यादीनाम् अध्यवसाया उद्योगा इव उपद्रवं चित्तस्य अशान्तिम् उपजनयन्ति उत्पादयन्ति।

राजानः अनुदिवसम् प्रतिदिनम् पापेन कल्मषेण आपूर्य्यमाणाः संभ्रियमाणाः इव आध्मातमूर्त्तयः स्फीतशरीरा भवन्ति।

तदवस्थाश्च ताः पूर्वोक्ताः अवस्थाः दशाः येषां ते तादृशाः, व्यसनशतशरव्यतां व्यसनस्य मृगयाक्षादिबहूलव्यसनस्य शरव्यतां लक्ष्यताम् उपगताः प्राप्ताः, वल्मीकतृणाग्रावस्थिताः वल्मीकं पिपीलिकादिकृतमृत्पुञ्जं तत्र तृणाग्रे तृणाग्रभागे अवस्थिताः विद्यमानाः स्थिताः जलबिन्दवः सलिलबिन्दव इव, पतितम् भ्रष्टम् अपि आत्मानं स्वं न अवगच्छन्ति नो जानन्ति। यथा वल्मीकतृणाग्राभागे अवस्थिता जलबिन्दवः अचेतनत्वात् पतितमात्मानं नावगच्छन्ति तथैव मृगयाक्षाद्यनेकव्यसनासक्ताः राजानः स्वकर्मविच्युतमपि आत्मानं न जानन्तीति भावः।

**सरलार्थः -**

परिश्रमवशात् पक्षिणः शिथिलीभूतस्य गलदेशस्य इव तथा खद्योतस्य प्रकाशः इव क्षणिकसुन्दरदर्शना इयं सम्पद्। अत एव ज्ञानिभिः निन्दितया एतया सम्पदा प्रलुब्धाः सन्तः केचन राजानः तु ज्ञानिनां निन्दाभाजनाः भवन्ति। एते किञ्चिद्धनलाभस्य अहङ्कारेण स्वस्वजन्मवृतान्तं विस्मरन्ति। वात-पित्त-कफैः दूषितं रुधिरमिव बहुविधैः दोषैः वर्धितां विषयासक्तियन्त्रणां भुञ्जन्ते। शब्दस्पर्शादिविषयाणां ग्रहणे लोलुपैः विषयाणां बाहुल्यात् सहस्रसंख्यकैः इन्द्रियैः कष्टम् अनुभवन्ति। प्रकृत्या मनः विविधेषु विषयेषु प्रधावति। अत एकमपि मनः सहस्रत्वेन प्रतीयते। तेनापि मनसा राजानः चञ्चलताम् उपयन्ति। ते च राजानः पुनः दुष्टग्रहैः आविष्टाः इव, प्रेतैः गृहीताः इव, मन्त्रशक्तिभिः वशीभूताः इव, वन्यपशुभिः आक्रान्ताः इव, पिशाचग्रस्ताः इव च दृश्यन्ते। ते वदनानि वक्रीकुर्वन्ति कामदेवस्य कुसुमशरैः प्रतिहताः इव, आचरन्ति धनस्य अहङ्काररूपाग्निना पच्यमाना इव, कर्कटवत् कौटिल्यं व्यवहरन्ति। पापेन कर्तव्यमार्गम् अनुसर्तुं शक्तिः राज्ञां विनष्टा भवति। तस्मात् ते राजानः खञ्जवत् अन्यैः परिचाल्यन्ते। मृषाकथनरूपस्य अभ्यासस्य विषेण विकृतमुखाः ते कष्टेन कथयन्ति। सप्तच्छदपुष्पाणां रजःस्पर्शेन यथा शिरोवेदना समुत्पद्यते तथैव तेषां रजोगुणसम्भूतं रक्तनयनयुगलं प्रजानां दुःखं समुत्पादयति। ते भूपाः मुमूर्षवः इव बान्धवान् न परिचिन्वन्ति, अक्षिरोगैः आक्रान्ताः इव ते प्रतावतः जनान् न पश्यन्ति, कालसर्पेण दष्टाः यथा विषवैद्यस्य उत्कृष्टैः महामन्त्रैः अपि चैतन्यं न प्राप्नुवन्ति, तथैव ते राजानः उत्कृष्टमन्त्रणाभिः अपि स्वविधेयम् न अनुजानन्ति, लाक्षानिर्मिताभूषणानि इव अन्यप्रतापं न सहन्ते, स्तम्भबद्धगजाः इव हितोक्तिम् अपि न आकर्णयन्ति।

धनलिप्सारूपविषेण मूर्च्छिताः ते सर्वम् एव धनमयम् इति पश्यन्ति। प्रस्तरैः शाणिताः बाणाः यथा धनुर्मुक्ताः सन्तः निर्दिष्टं लक्ष्यं भिनत्ति, तथैव सुरासेवनेन वर्धितोग्रस्वभावाः राजानः अन्येन प्रेरिताः

सन्तः प्रजाः पीडयन्ति। यष्टिनिक्षेपेण फलाहरणवत् दूरस्थितान् सद्वंशजान् अपि नाशयन्ति। अकालविकसितानि मनोहराणि पुष्पाणि यथा सुन्दराणि सन्त्यपि जनानां विनाशं सूचयन्ति। तथैव मनोरमाकृतयस्ते राजानः जनानां विनाशस्य कारणानि भवन्ति। श्मशानस्थस्य अग्नेः भस्मवत् अत्यन्तं भयङ्कराः भवन्ति राज्ञां सम्पत्तयः। नेत्ररोगाक्रान्ताः यथा दूरस्थं वस्तु द्रष्टुं न शक्नुवन्ति तथैव राजानः कृतस्य परिणामं द्रष्टुं न पारयन्ति। राजभवनं तावत् कामुकानां वारवनितागृहम् इव नीचस्वभावानां सदनम्। मृतव्यक्तेः दाहकालीनस्य ढक्कानादस्य इव राजगणस्य नामानि श्रुत्वापि उद्वेगः जन्यते। ब्रह्महत्यादिरूपाणां पापानुष्ठानानाम् उद्योगवत् तस्य ध्यानमात्रेणैव मनसि अशान्तिः उत्पद्यते। मन्ये पापेन प्रतिदिनं पूर्यमाणाः राजानः स्फीतशरीराः भवन्ति। तदवस्थायां कामादिदोषैः दुष्टास्ते वल्मीकमृत्तिकया उत्पन्नानां तृणानाम् अग्रपतितजलविन्दुवत् आत्मनां पतनमपि बोद्धुं समर्थाः न भवन्ति।

**व्याकरणविमर्शः -**

**क) समासः -**

१. धनलवलाभावलेपविस्मृतजन्मानः - धनस्य लवः धनलवः इति षष्ठीतत्पुरुषः। धनलवस्य लाभः धनलवलाभः इति षष्ठीतत्पुरुषः। धनलवलाभेन अवलेपः धनलवलाभावलेपः इति तृतीयातत्पुरुषः। तेन विस्मृतं धनलवलाभावलेपविस्मृतम् इति तृतीयातत्पुरुषः। धनलवलाभावलेपविस्मृतं जन्म येषां ते धनलवलाभावलेपविस्मृतजन्मानः इति बहुव्रीहिसमासः।

२. उत्कुपितलोचनाः- उत्कुपिते लोचने येषां ते उत्कुपितलोचनाः इति बहुव्रीहिसमासः।

३. मृषावादविषविपाकसञ्जातमुखरोगाः - मृषावाद एव विषम् मृषावादविषम् इति कर्मधारयसमासः। तस्य विपाकः मृषावादविषविपाकः इति षष्ठीतत्पुरुषः। मृषावादविषविपाकेन सञ्जातः मृषावादविषविपाकसञ्जातः इति तृतीयातत्पुरुषः। मृषावादविपाकसञ्जातः मुखरोगः येषां ते मृषावादविषविपाकसञ्जातमुखरोगाः इति बहुव्रीहिसमासः।

४. महामानस्तम्भनिश्चलीकृताः - महत् मानं यस्य स महामानः इति बहुव्रीहिः। महामान एव स्तम्भः महामानस्तम्भः इति कर्मधारयः। महामानस्तम्भेन निश्चलीकृताः महामानस्तम्भनिश्चलीकृताः इति तृतीयातत्पुरुषः।

**ख) सन्धिविच्छेदः**

१. पञ्चभिरप्यनेकैः - पञ्चभिः अपि अनेकैः।

२. भूतैरिवाभिभूयन्ते - भूतैः इव अभिभूयन्ते।

३. मन्त्रैरिवावेश्यन्ते - मन्त्रैः इव आवेश्यन्ते।

४. सहस्रसंख्यैरिवेन्द्रियैरायास्यमानाः - सहस्रसंख्यैः इव इन्द्रियैः आयास्यमानाः।

**अलङ्कारविमर्शः**

१. धनलाभेत्यस्माद् बाध्यमानाः इत्यंशभूते वाक्ये दूषितरक्तेन उपमानेन सह रागावेशस्य अवैधर्म्यस्य साम्यस्य कथनाद् उपमालङ्कारः। अत्र उपमानम् , उपमेयम्, साधारणधर्मः सादृश्यवाचकः इत्यंशचतुष्कस्य सत्त्वात् पूर्णोपमा। तल्लक्षणं दर्पणे -

"सा पूर्णा सामान्यधर्म औपम्यवाचि च।

उपमेयं चोपमानं भवेद्वाच्यम्" इति।

२. विविधेतीत्यारभ्य आयास्यमानाः इत्यन्ते वाक्ये गुणस्य सम्भावनाद् गुणोत्प्रेक्षालङ्कारः।

३. एवमेव प्रकृतीतीत्यस्मिन् वाक्ये, मन्त्रैरित्यस्मिन् वाक्ये, मदनशरैरित्यस्मिन् वाक्ये च उत्प्रेक्षालङ्कारः।

४. कुलीराः इत्यस्मिन् वाक्ये, अधर्मभग्नगतयः इत्यस्मिन् वाक्ये च उपमानोपमेययोः अवैधर्म्यस्य साम्यस्य कथनाद् अंशचतुष्कस्य सत्त्वाच्च पूर्णोपमालङ्कारः।

५. मृषावादविषविपाकसञ्जातमुखरोगाः इत्यत्र मृषावाद एव विषमिति निरङ्गं रूपकम्।

६. उत्कुपितलोचनाः इत्यस्मिन् वाक्ये उपमाऽलङ्कारः।

७. कालदष्टाः इत्यस्मिन् वाक्ये उपमाकाव्यलिङ्गयोस्तिलतण्डुलन्यायेन संसृष्टिरलङ्कारः।

८. तृष्णाविषमूर्च्छिताः इत्यस्मिन् वाक्ये रूपकोत्प्रेक्षयोरङ्गाङ्गिभावेन संकरः।

९. इषव इत्यस्मिन् वाक्ये, दूरस्थितानीत्यस्मिन् वाक्ये, अकालेतीत्यस्मिन् वाक्ये, श्मशानाग्रयः इत्यस्मिन् वाक्ये उपमाऽलङ्कारः, तैमिरिका इत्यस्मिन् वाक्ये, उपसृष्टा इत्यम्मिन् वाक्ये, श्रूयमाणा इत्यस्मिन वाक्ये, चिन्त्यमाना इत्यस्मिन् वाक्ये अनुदिवसमित्यस्मिन् च उपमाऽलङ्कारः।

**कोशः**

१. "कुसुमं स्त्रीरजोनेत्ररोगयोः फलपुष्पयोः" इति मेदिन्युक्तेः कुसुमशब्दस्य स्त्रीरजः, नेत्ररोगः, फलम्, पुष्पम् इत्येतेषु अर्थेषु व्यवहारो भवति।

२. "भूतिर्भस्मनि सम्पत्तिहस्तिशृङ्गारयोः स्त्रियाम्" इति मेदिनीकोशाद् भूतिशब्दस्य सम्पत्तिः हस्तिशृङ्गारम् इत्यनयोः अर्थयोः प्रयोगः।

## पाठगतप्रश्नाः- २

७. क्षणस्थायिन्या सम्पदा लुब्धाः राजानः केषां निन्दाभाजनानि भवन्ति?

८. राज्ञां तेषाम् इन्द्रियाणाम् आधिक्यस्य कारणं किम्?

९. मनः कथं विविधेषु विषयेषु प्रधावति?

१०. मदनशरैः प्रतिहताः ते राजानः किं कुर्वन्ति?

११. राजानः किमिव वक्रगत्या व्रजन्ति?

१२. मुमूर्षूवत् ते राजानः किं परिचेतुम् असमर्थाः भवन्ति?

१३. राजसम्पत्तिः कीदृशी भवति?

१४. ते राजानः किमिव प्रजानां शिरोवेदनां जनयन्ति?

## १८.३) साम्प्रतं मूलपाठम् अवगच्छाम – १२

**अपरे तु स्वार्थनिष्पादनपरैर्धन–पिशित–ग्रास–गृध्रैरास्थाननलिनीबकैः, द्युतं विनोद इति, परादाराभिगमनं वैदग्ध्यमिति, मृगया श्रम इति, पानं विलास इति, प्रमत्तता शौर्य्यमिति, स्वदारपरित्यागोऽव्यसनितेति, गुरुवचनावधीरणम् अपरप्रणेयत्वमिति, अजितभृत्यता सुखोपसेव्यत्वमिति, नृत्य–गीत–वाद्य–वेश्याभिसक्ती रसिकतेति, महापराधाकर्णनं महानुभावतेति, पराभवसहत्वं क्षमेति, स्वच्छन्दता प्रभुत्वमिति, देवावमाननं महासत्त्वतेति, वन्दितजनख्यातिर्यश इति, तरलता उत्साह इति, अविशेषज्ञता अपक्षपातित्वमिति दोषानपि गुणपक्षमध्यारोपयद्भिरन्तः स्वयमपि विहसद्भिः प्रतारणकुशलैर्धूर्त्तैरमानुषोचिताभिः स्तुतिभिः प्रतार्य्यमाणा वित्तमदमत्तचित्ता निश्चेतनतया तथैवेत्यन्यारोपितालीकाभिमाना मर्त्यधर्म्माणोऽपि दिव्यांशावतीर्णमिव सदैवतमिवातिमानुषमात्मानमुत्प्रेक्षमाणाः प्रारब्धदिव्योचितचेष्टानुभावाः सर्वजनस्य उपहास्यतामुपयान्ति।**

**व्याख्यानम् -**

अपरे तु दोषान् अपि गुणपक्षम् अध्यारोपयद्भिः धूर्तैः अमानुषोचिताभिः स्तुतिभिः प्रतार्यमाणाः सर्वजनस्योपहास्यताम् उपयान्तीति मूलवाक्यस्यान्वयः। अत्र धूर्तैः इत्यस्य स्वार्थनिष्पादनपरैः, धनपिशितग्रासगृध्रैः, आस्थाननलिनीबकैः, दोषान् अपि गुणपक्षमध्यारोपयद्भिः, अन्तः स्वयमपि विहसद्भिः, प्रतारणकुशलैः इत्येतानि षड् विशेषणानि सन्ति। एवं वाक्यस्य धूर्तविशेषणसंयोगेन आकारो भवति - अपरे तु स्वार्थनिष्पादनपरैः, धनपिशितग्रासगृध्रैः, आस्थाननलिनीबकैः, गुणपक्षमध्यारोपयद्भिः, अन्तः स्वयमपि विहसद्भिः, प्रतारणकुशलैः, धूर्तैः अमानुषोचिताभिः स्तुतिभिः प्रतार्यमाणाः सर्वजनस्योपहास्यताम् उपयान्ति इति।

अपरे इत्यस्य प्रतार्यमाणाः, वित्तमदमत्तचित्ताः, निश्चेतनतया तथैव इत्यन्यारोपितालीकाभिमानाः मर्त्यधर्माणः, दिव्यांशावतीर्णमिव सदैवतमिवातिमानुषम् आत्मानमुत्प्रेक्षमाणाः, प्रारब्धदिव्योचितचेष्टानुभावाः इत्येतानि पञ्च विशेषणानि। एवं धूर्तैः इत्यस्य अपरे इत्यस्य विशेषणानां संयोजनेन जातस्य वाक्यस्यान्वयार्थः तावत् - अपरे तु अन्ये राजानः तु स्वार्थनिष्पादनपरैः स्वार्थस्य निजप्रयोजनस्य यत् निष्पादनम् साधनं वञ्चनादिकं तत्परैः स्वार्थनिष्पादकवञ्चनादिपरैः, धनपिशितग्रासगृध्रैः धनं द्रव्यं तदेव पिशितं मांसं तस्य ग्रासे भक्षणे गृध्रैः दूरदृष्टिभिः विहगविशेषैः इव, आस्थाननलिनीबकैः आस्थानं राजसभामण्डपः, एव नलिनी कमलिनी



तस्यां बकैः कङ्कैः, यथा बका नलिनीमवलम्ब्य तिरोहिता भूत्वा मीनान् भक्षयन्ति तथैव बकव्रतिका धूर्ता अपि राजानमाश्रित्य लोकान्प्रतार्य तदीयं धनमात्मसात्कुर्वन्तीति भावः। दोषान् अपि अपराधान् अपि गुणपक्षम् गुणत्वेन आरोपयद्भिः प्रशंसद्भिः, अन्तः अन्तःकरणेषु स्वयमपि आत्मना अपि विहसद्भिः हासं कुर्वद्भिः, प्रतारणकुशलैः वञ्चननिपुणैः, धूर्तैः प्रतारकैः अमानुषोचिताभिः देवयोग्याभिः स्तुतिभिः प्रशंसावाग्भिः प्रतार्यमाणाः वञ्च्यमानाः वित्तमदमत्तचित्ताः वित्तमदेन धनगर्वेण मत्तम् उन्मत्तं चित्तं मानसं येषां ते धनगर्वोन्मत्तमानसाः, निश्चेतनतया बुद्धिजाड्यात् तथैव 'एते यथा वदन्ति तथा एव अहम् अस्मि' इति एवम्प्रकारेण अन्यारोपितालीकाभिमानाः अन्येन आरोपितः अध्यस्तः अलीकाभिमानः असत्यमदः येषां ते अन्याध्यस्तासत्यमदाः, मर्त्यधर्माणः मरणशीलाः सन्तः अपि दिव्यांशावतीर्णम् इव अलौकिकदेवांशसम्भूतम् इव सदैवतम् इव देवताश्रितम् इव अतिमानुषम् मानवमतिक्रम्य वर्तमानम् आत्मानं स्वम् उत्प्रेक्षमाणाः सम्भावयन्तः, प्रारब्धदिव्योचितचेष्टानुभावाः प्रारब्धाः समारब्धाः दिव्योचिताः देवयोग्याः चेष्टानुभावाः शापमात्रेण अरिप्रणाशादिप्रभावाः यैस्ते सर्वजनस्य सकललोकस्य उपहास्यताम् उपहासविषयताम् उपयान्ति प्राप्नुवन्ति।

इति दोषानपि गुणपक्षमध्यारोपयद्भिः इत्यत्र दोषाणां वर्णनमस्ति। अत्र षोडश दोषाः वर्णिताः। दोषप्रतिपादकांशस्य व्याख्यानं तावद् - द्यूतं दुरोदरम् अक्षक्रीडा विनोद क्रीडासाधनम् इति, परादाराभिगमनं परदाराणाम् अन्यभार्याणाम् अभिगमनं सङ्गमः वैदग्ध्यं रसिकत्वम् इति, मृगया आखेटः श्रमः व्यायामः इति, पानं सुरापानं विलास विलमनम् इति, प्रमत्तता उन्मादना शौर्य्यं शूरस्वभावः इति, स्वदारपरित्यागः निजपत्नीत्यागः अव्यसनिता व्यसनाभावः इति, गुरुवचनावधीरणम् गुरवचनस्य आचार्यवचस अवधीरणं स्वीकारः परप्रणेयत्वं अन्यप्रभावितत्वम् इति, अजितभृत्यता अस्वायत्तीकृतसेवकता सुखोपसेव्यत्वं सुखेन अनायासेन उपसेव्यत्वम् उपसेवनीयत्वम् इति। अर्थाद् मदीयाः सेवका न मदधीनाः, अतः तैः अहम् सुखेन उपसेवनीयः, मदीया ख्यातिर्भविष्यति इति तात्पर्यम्। नृत्य-गीत-वाद्य-वेश्याभिसक्तिः नृत्यं नाट्यम् गीतं गानं वाद्यं वादित्रं वेश्या गणिका तासु अभिसक्तिः आसक्तिः रसिकता रसाभिज्ञता इति, महापराधाकर्णनं महताम् अपराधानां नरवधादीनां श्रवणं महानुभावता महाप्रभावत्वम् इति, पराभवसहत्वं पराभवस्य पराजयस्य सहत्वं सहनशीलत्वं क्षमा क्षान्तिः इति, स्वच्छन्दता स्वेच्छावर्तनं प्रभुत्वम् ऐश्वर्यम् इति, देवावमाननं देवानां नारायणादीनाम् अवमाननम् अपमानं महासत्त्वता महाशक्तिशालित्वम् इति, वन्दितजनख्यातिः वन्दितजनाः स्तुतिपाठकजनाः तैः कृता ख्यातिः स्वप्रसिद्धिः यश इति, तरलता चञ्चलता उत्साहः अध्यवसाय इति, अविशेषज्ञता विशेषस्यानभिज्ञता अपक्षपातित्वं पक्षपातराहित्यम् समवर्तित्वम् इति। एवं दोषान् गुणपक्षमध्यारोपयद्भिः धूर्तैः अन्ये राजानः वञ्च्यमानाः भवन्ति।

द्यूतस्य विनोदत्वस्वीकारो दोषाय एव भवति। विनोदपक्षे शाकुन्तलभणितिः लभ्यते - "मिथ्यैव व्यसनं वदन्ति मृगयामीदृग् विनोदः कुतः"इति। सर्वेण प्रयत्नेन राजा व्यसनेषु अनासक्तो भवेदिति कथयति मनुस्मृतिः। द्यूतक्रीडा, परस्त्रीगमनम्, मृगया सुरापानञ्च कामजेषु व्यसनेषु चत्वारि भवन्ति। तथाह्युक्तं मनुसंहितायां सप्तमाध्याये राजधर्मप्रकरणे -

"मृगयाक्षो दिवास्वप्नो परिवादः स्त्रियो मदः।

तौर्यत्रिकं वृथाट्या च कामजो दशको गणः।।"इति। कामजेषु व्यसनेषु च एतच्चतुष्टयं कष्टतमम्। तथाह्युक्तम् -

"पानमक्षाः स्त्रियश्चैव मृगया च यथाक्रमम्।

एतत्कष्टतमं विद्याच्चतुष्के कामजे गणे।।"इति।

परदारैः सह सङ्गमो न कार्यः इति स्मृतयः। अतः स्वदारान् परित्यज्य परदाराभिसक्तिः राज्ञः दुश्चरितमेव प्रकटयति। अजितभृत्यता हि उपसेव्यत्वम् इति राज्ञः क्लीबत्वमेव प्रतिपादयति। नृत्यगीतवेश्याभसक्तिः राज्ञः नैव उचिता। यतो हि इदं कामजव्यसनं भवति। महापराधानां सामान्यबुद्ध्या उपेक्षणं राज्ञः दोषाय भवति। यतो हि राजा यदि एवं करोति तदा मात्स्यन्यायः प्रवर्तते। तदा दुर्बलान् बलवत्तराः ग्रसन्ते। एवम् अविचारमूलकम् इदं राज्ञ आचरणं भवति।

स्वेच्छाचरणं न हि राज्ञ ऐश्वर्यम्। "यद् यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः" इति गीतोक्तेः राज्ञः स्वेच्छाचरणं प्रजानाम् अनियन्त्रिताचरणस्य कारणं स्यात्। अतः राजा कदापि स्वेच्छाचारी न भवेत्। स हि शास्त्रानुसारेण एव राजधर्मं परिपालयेत्।

देवावमाननं राज्ञः नास्तिक्यस्य परिचायकम्। न हि तद् महासत्त्वतां प्रतिपादयति। तद् हि निन्दनीयमेव। महासत्त्वता इत्यत्र व्यवहृतः सत्त्वशब्दः गुणपरकः - "सत्त्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः" इति मेदिनीकोशात्। महाशक्तिशालित्वं इत्यत्र शक्तिशालित्वं तु गुणपरकमेव।

अविशेषज्ञता कदापि अपक्षपतित्वं न भवति। तद् हि विवेकराहित्यमेव।

### सरलार्थः -

एवं नैके राजानः सन्ति, येषां सभायां स्वार्थसम्पादने रताः, धनरूपिमांसग्रहणे गृध्रसदृशाः, सभामण्डपरूपपद्मवने स्थिताः बकपक्षिस्वरूपाः, प्रवञ्चने कुशलाः केचन धूर्ताः तिष्ठन्ति। ये च राज्ञाम् एवं बोधनं कुर्वन्ति यत् - अक्षक्रीडा भवति विनोदः, परस्त्रीसङ्गमः चातुर्यम्, मृगया व्यायामः, मद्यपानं विलासिता, कस्मिंश्चिदपि विषये असावधानता हि वीरता, तथा स्वस्य धर्मपत्न्याः त्यागः अनासक्तिः, गुरूपदेशस्य अवमानना हि स्वाधीनता, स्वेच्छानुसारं विद्यमानानां सेवकानां कृते दण्डस्य अभावो हि सुखपूर्विका शुश्रूषा, नृत्य-गीत-वाद्यादिषु गणिकासु च आसक्तिः रसिकता, महत्सु अपराधेषु अनवधानं स्वस्य महानुभवतायाः परिचयः, परकृतस्य अपमानस्य सहनं हि क्षमा,स्वेच्छाचारित्वं हि प्रभुत्वम्, देवतानां तिरस्कारः महाबलस्य परिचयः, वन्दिजनैः कृता प्रशंसा यशः, मनसः चञ्चलता हि उत्साहः, सूक्ष्मरूपेण कार्याणाम् अपर्यालोचनं भवति निष्पक्षपातः। एवम्प्रकारेण प्रतारणनिपुणाः धूर्ताः गुणेषु दोषाणाम् अपि आरोपं कुर्वन्ति। किन्तु ते मनसि स्वयमेव उपहासं कुर्वन्तः देवतानां यथायोग्यं स्तुतिभिः राज्ञां प्रतारणां कुर्वन्ति। अन्यपक्षे तु राजानः धनस्य अहङ्कारवशात् उन्मत्ताः सन्तः जनानाम् एवंभूतैः स्तुतिभिः चैतन्यविहीनाः भवन्ति, अत एव "एते यथा वदन्ति, अहं तथैव अस्मि" इति चिन्तयन्ति। किञ्च, तत्सर्वं यथार्थं मत्वा मिथ्या अभिमानं कुर्वन्ति। मनुष्याः सन्तोऽपि ते राजानः आत्मानं देवानाम् अंशतः अवतीर्णान् अथवा देवताभिः अधिष्ठितान् मन्यन्ते। किञ्च स्वकार्यं ते राजानः देवानुग्रहं मन्यन्ते।

एवं ते राजानः समस्तलोकस्य उपहासयोग्यत्वं व्रजन्ति। एवं राजा मा भूत् चन्द्रापीड इति शुकनासस्याशयः।

**व्याकरणविमर्शः -**

**क) समासः -**

१. आस्थाननलिनीबकैः- आस्थानम् एव नलिनी आस्थाननलिनी इति कर्मधारयसमासः। आस्थाननलिन्यां बकः आस्थाननलिनीबकः, तैः इति सप्तमीतत्पुरुषसमासः।

२. प्रारब्धदिव्योचितचेष्टानुभावाः- दिव्योचिताः चेष्टानिभावाः दिव्योचितचेष्टानुभवाः इति कर्मधारयसमासः। प्रारब्धाः दिव्योचितचेष्टानुभवा यैः ते प्रारब्धदिव्योचितचेष्टानुभावाः इति बहुव्रीहिसमासः।

**ख) सन्धिविच्छेदः**

१. प्रतारणकुशलैर्धूर्त्तैरमानुषोपचिताभिः - प्रतारणकुशलैः धूर्तैः अमानुषोपचिताभिः।

२. देवाधिष्ठितोऽहम् - देवाधिष्ठितः अहम्।

**अलङ्कारविमर्शः**

१. अपर इत्यस्मिन् वाक्ये परम्परितरूपकमलङ्कारः।

२. इतीत्यस्मिन् वाक्ये उत्प्रेक्षालङ्कारः।

३. सदैवतमित्यस्मिन् वाक्येऽपि उत्प्रेक्षालङ्कारः।

**कोशः**

१. "सत्त्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः" इति मेदिनी।

## पाठगतप्रश्नाः- ३

१५. राजसभायां स्थिताः स्वार्थनिष्पादनपराः धूर्ताः कीदृशाः भवन्ति?

१६. धूर्ताणां तेषां मते अक्षक्रीडा नाम का?

१७. राजसभास्थानां धूर्ताणां नये प्रभुत्वं किम्?

१८. कीदृशाः जनाः निश्चेतनाः भवन्ति?

१९. ते राजानः कस्मात् कारणात् हास्यास्पदानि भवन्ति?

## पाठसारः

यौवनम्, धनसम्पत्तिः, प्रभुत्वम्, अविवेकिता – एतेषु एकैकमपि महत् अनर्थं जनयति। यत्र तु एतत् चतुष्टयं वर्तते तत्र किमपि वक्तव्यमेव नास्ति। एषा दुराचारिणी लक्ष्मीः यं राजानम् आश्रयति सः अज्ञानेनैव दुराचारपरायणो भवति। अस्मिन् पाठे महाकविना बाणेन शुकनासमुखेन चन्द्रापीडोपदेशव्याजेन तस्याः लक्ष्म्याः कुप्रभावः सकारणं वर्णितः। तथाहि सा लक्ष्मीरेव राज्याभिषेकसमये एव मङ्गलकलशजलैः राज्ञां दुर्गुणापसारणम् अकृत्वा उदारतां प्रक्षालयन्ति, होमाग्निना चित्तं मलिनीकरोति, पुरोहितस्य कुशाग्रभागरूपसम्मार्जन्या दयादाक्षिण्यक्षमासन्तोषादिगुणान् दूरीकरोति, मुकुटस्य पट्टबन्धनेन राज्ञां वार्धक्यगतेः स्मृतिम् आच्छादयति, छत्रमण्डलेन तेषां परलोकज्ञानम् अपसारयति, चामरैः सत्यकथनं निवर्तयति, वेत्रदण्डैः धैर्यशौर्यादीन् सद्गुणान् दूरं संस्थापयति,जयशब्दादिकलरवैः हितवचनानि न श्रावयति। यानि यशांसि नामानि राजस्तुतयः वर्तन्ते यथा राज्ञा इदं कार्यम्, इत्थं स्थेयम् इत्थमाचरणीयमित्यादीनि उत्तमराजचरितवर्णनरूपाः स्तुतयः यथा पत्रैः मलम् अपसार्यते तथैव राज्ञां ध्वजायाः वस्त्ररूपपत्रैः तानि सर्वाणि अपसारयति इयं लक्ष्मीः।

परिश्रमेण क्लान्तस्य पक्षिणः शिथिलीभूतः गलदेशः यथा क्षणस्य कृते चञ्चलताम् उपैति, खद्योतस्य प्रकाशः यथा क्षणाय सुन्दरः भवति तथैव सुन्दरदर्शना इयं सम्पद्। अस्याः सम्पदः चञ्चलत्वे अपि ज्ञानिभिः निन्दितया एतया सम्पदा प्रलुब्धाः सन्तः केचन राजानः तु ज्ञानिनां निन्दाभाजनानि एव भवन्ति। एते किञ्चिद्धनलाभस्य अहङ्कारेण स्वस्वजन्मवृतान्तं विस्मरन्ति। अपि च वात-पित्त-कफैः दूषितं रुधिरमिव बहुविधैः दोषैः वर्धितां विषयासक्तियन्त्रणां भुञ्जन्ते। शब्दस्पर्शादिविषयाणां ग्रहणे लोलुपैः विषयाणां बाहुल्यात् पञ्चाधिकसहस्रसंख्यकैः इन्द्रियैः कष्टम् अनुभवन्ति। प्रकृत्या एव मनः विविधेषु विषयेषु प्रधावति। तस्मादेव एकमपि मनः सहस्रत्वेन प्रतीयते। तेनैव मनसा राजानः चञ्चलताम् उपयन्ति। तेन ते च राजानः पुनः दुष्टग्रहैः गृहीता इव, प्रेतैः गृहीताः इव, मन्त्रशक्तिभिः वशीभूताः इव, वन्यपशुभिः आक्रान्ताः इव, पिशाचग्रस्ताः इव च दृश्यन्ते। ते वदनानि तथा वक्रीकुर्वन्ति यथा कामदेवस्य कुसुमशरैः प्रतिहताः प्राणिनः प्रकटयन्ति, धनस्य अहङ्काररूपाग्निना दग्धाः यथा आचरन्ति तथैव ते आचरन्ति, कर्कटवत् कौटिल्यं व्यवहरन्ति। पापेन कर्तव्याणां पथिषु चलितुं राज्ञां तेषां शक्तिः विनष्टा भवति। तस्मात् कारणात् ते राजानः खञ्जवत् अन्यैः परिचाल्यन्ते। मृषाकथनस्य अभ्यासवशात् ते कष्टेनैव सर्वं तथा कथयन्ति यथा विषेण विकृतमुखाः कथयन्ति। सप्तच्छदपुष्पाणां रजःस्पर्शेन यथा शिरोवेदना समुत्पद्यते तथैव तेषां लक्ष्मीमदेन रजोगुणसम्भूतं रक्तनयनयुगलं प्रजानां दुःखं समुत्पादयति। ते भूपाः मुमूर्षवः इव बान्धवान् न परिचिन्वन्ति, अक्षिरोगैः आक्रान्ताः इव ते प्रतापवतः जनान् अपि न पश्यन्ति, कालसर्पेण दष्टाः यथा विषवैद्यस्य उत्कृष्टैः महामन्त्रैः अपि चैतन्यं न प्राप्नुवन्ति, तथैव ते राजानः उत्कृष्टमन्त्रणाभिः अपि स्वविधेयम् न अनुजानन्ति। लाक्षानिर्मितं भूषणं यथा अग्निः न सहते तथैव ते राजानः अन्यप्रतापं न सहन्ते। स्तम्भबद्धगजाः इव हितोक्तिम् अपि न आकर्णयन्ति। धनलोभरूपविषेण मूर्च्छिताः ते सर्वम् एव धनमयम् इति पश्यन्ति। प्रस्तरैः शाणिताः बाणाः यथा धनुर्मुक्ताः निर्दिष्टलक्ष्यभेदकाः तथैव ते सुरासेवकाः वर्धितदर्पाः राजानः खलप्रेरिताः प्रजापीडकाः। ते हि दूरस्थानां सद्वंशानामपि यष्टिनिक्षेपेण

फलानाम् आहरणवत् नाशकाः। अकालविकसितानि मनोहराणि पुष्पाणि रम्याणि अपि जनसन्तापकानि एवमेव राजानाः रम्याः विनाशकारकाः। श्मशानस्थस्याग्नेः भस्मवत् अत्यन्तं भयङ्करं राजश्रीः। नेत्ररोगाक्रान्ताः इव ते दृश्यस्यापि अदर्शकाः। तषां राज्ञां भवनं कामुकानां वारवनितागृहवत् नीचस्वभावानाम् आश्रयः। ते राजानः पापपूर्णाः प्रत्यहं स्फीतकायाः भवन्ति। तदवस्थायां कामादिदोषैः दुष्टास्ते वल्मीकमृत्तिकया उत्पन्नानां तृणानाम् अग्रपतितजलविन्दुवत् आत्मनां पतनमपि बोद्धुं समर्थाः न भवन्ति।

एवं नैके राजानः सन्ति, येषां सभामण्डपरूपपद्मवने स्थिताः स्वार्थसम्पादने रताः गृध्रसदृशाः, प्रवञ्चने कुशलाः केचन धूर्ताः तिष्ठन्ति। ते दोषान् अपि गुणत्वेन भावयन्ति। यथा - अक्षक्रीडा भवति विनोदः, परस्त्रीयाः अभिगमनं चातुर्यम्, मृगयणं व्यायामः, मद्यपानं विलासिता, असावधानता हि वीरता, स्वस्य धर्मपत्न्याः त्यागः अनासक्तिः इत्यादिप्रकारेण ते प्रतारणनिपुणाः धूर्ताः बोधयित्वा राजानं वञ्चयन्ति। ते राजानः धनोन्मत्ताः सन्तः जनस्तुतिभिः विवेकहीनाः भवन्ति। ते आत्मानं देवांशं मन्यन्ते। एवं ते समेषां उपहासास्पदानि भवन्ति।

## पाठान्तप्रश्नाः

१. दुराचारिण्या लक्ष्म्या वशीभूतानां राज्ञां दशा कीदृशी भवतीति वर्णयत।
२. अभिषेककाले राज्ञां सुगुणाः कैः कथञ्च अपनीयन्ते।
३. राजानः इन्द्रियैः केन प्रकारेण कष्टभोगं कुर्वन्ति।
४. राजानः आत्मकर्तव्यं यथा आत्मपतनं बोद्धुम् असमर्था भवन्ति तत्र सोदाहरणं कारणानि प्रदर्शयत।
५. राज्ञां सभायां कीदृशा धूर्ताः तिष्ठन्तीति वर्णयत।
६. स्वार्थनिष्पादनपराः धूर्ताः केन प्रकारेण दोषेषु गुणानाम् आरोपं कुर्वन्ति।
७. अहङ्कारेण उन्मत्ताः राजानः केन प्रकारेण जनानां हास्यास्पदानि भवन्ति।

## पाठगतप्रश्नोत्तराणि

१. दुराचारया लक्ष्म्या परिगृहीताः राजानः विक्लवा दुर्मतयश्च भवन्ति।
२. अभिषेककाले मङ्गलकलशजलैः राज्ञां दाक्षिण्यं प्रक्षाल्यते इव ।
३. दुष्टानां राज्ञां हृदयं होमाग्निधूमेन मलिनीभवति।
४. राज्ञां क्षमागुणः पुरोहितानां कुशाग्रसम्मार्जनीभिः अपसार्यते।
५. अभिषेकसमये राज्ञां वार्धक्यबुद्धिः मुकुटस्य बन्धनेन दूरीभवति।
६. राज्ञां यशः अभिषेककाले ध्वजपत्रसंलग्नैः पल्लवैः परिमार्ज्यते।

७. क्षणस्थायिन्या सम्पदा लुब्धाः राजानः मनस्विजनानां निन्दाभाजनानि।

८. राज्ञां तेषाम् इन्द्रियाणाम् आधिक्ये कारणं विविधविषयाणां ग्रासस्य लालसा।

९. मनः स्वभावतः चञ्चलम् अतः विविधेषु विषयेषु प्रधावति।

१०. मदनशरैः प्रतिहताः ते राजानः मुखभङ्गसहस्राणि कुर्वन्ति।

११. राजानः कर्कटवद् वक्रगत्या व्रजन्ति।

१२. मुमूर्षूवत् ते राजानः बान्धवान् परिचेतुम् असमर्थाः भवन्ति।

१३. राजसम्पत्तिः श्मशाग्निजन्यं भस्मवद् भयङ्करं भवति।

१४. ते राजानः सप्तच्छदतरव इव प्रजानां शिरोवेदनां जनयन्ति।

१५. राजसभायां स्थिताः स्वार्थनिष्पादनपराः धूर्ताः प्रतारणकुशलाः दोषेषु गुणान् आरोपयन्तः स्वयमपि विहसन्तः भवन्ति।

१६. धूर्ताणां तेषां मते अक्षक्रीडा नाम विनोदः।

१७. राजसभास्थानां धूर्ताणां नये प्रभुत्वं स्वेच्छाचारित्वम्।

१८. वित्तमदमत्तचित्ताः जनाः निश्चेतनाः भवन्ति।

१९. ते राजानः दिव्योचितचेष्टादर्शनात् हास्यास्पदानि भवन्ति।

॥ इति अष्टादशः पाठः ॥

# १९

# शुकनासोपदेशः - लक्ष्मीदुष्प्रभावः- २

## प्रस्तावना

अस्मिन् पाठे शुकनासोपदेशस्य 'आत्मविडम्बनञ्च' इत्यतः आरभ्य 'स्वभवनमाजगाम' इत्यन्तः अंशः वर्ण्यते। विद्या विनोदाय धनं मदाय, खलस्य वित्तं परपीडनाय। श्रियः प्रभावेण ते राजानः आत्मानम् ईश्वररूपेण मन्यन्ते। ते चिन्तयन्ति यत् ते साक्षात् शिवस्वरूपाः इति। ते गुरूणां ज्येष्ठानां शिष्टानां वा उपदेशं न स्वकुर्वन्ति। ये तेषां गुणकीर्तनं कुर्वन्ति, सम्पदः लुण्ठनेन राजानं वञ्चयन्ति, तान् एव राजानः धनादिना पोषयन्ति, सर्वविधं प्रयोजनं पूरयन्ति च। एतेन राजानः कदापि स्वाभ्युन्नतिं स्वराज्योन्नतिञ्च विदधातुं न शक्नुवन्ति। तस्मात् प्रधानामात्यः शुकनासः चन्द्रपीडं प्रबोधयति यत् अनेन मार्गेण न प्रवर्तनीयम्। स्वराज्यस्य पितुश्च उन्नत्यै चिन्तनीयम्। यानि राज्यानि जितानि तानि पुनर्जेयानि, स्वायत्तीकरणीयानि च नवीनानि राज्यानि। राज्यस्य राज्यस्थस्य राजाश्रितस्य च मङ्गलाय यतनीयम्।

अत्र महाकविः वस्तुतः उपदेशप्रदानादनन्तरं कथं तेन प्रजाः प्रति आचरणीयं कथं प्रजाः शासनीयाः कथं भृत्यादिभिः सह व्यवहरणीयम् इत्यादिकं शुकनासमुखेन वर्णयति।

## उद्देश्यानि

अमुम् पाठं पठित्वा भवान् -

- उपदेशानां पालनेन कथं राजव्यवस्था सम्यक् परिचाल्यते इति जानीयात्।
- भूपैः कथं प्रजायै आचरणीयम् इति जानीयात्।
- भूपानां सदाचरणेन प्रजाः राजाज्ञां सम्यक् परिपालयन्ति इति जानीयात्।
- पाठस्थानां पदानाम् अन्वयार्थं समासान् च जानीयात्।

## १९.१) साम्प्रतं मूलपाठम् अवगच्छाम – १३

**आत्मविडम्बनाञ्चानुजीविना जनेन क्रियमाणामभिनन्दन्ति। मनसा देवताध्यारोपणविप्रतारणासम्भूतसम्भावनोपहताश्चान्तःप्रविष्टापरभुजद्वयमिव आत्म-बाहुयुगलं सम्भावयन्ति। त्वगन्तरिततृतीयलोचनं स्वललाटमाशङ्कन्ते। दर्शनप्रदानमपि अनुग्रहं गणयन्ति, दृष्टिपातमप्युपकारपक्षे स्थापयन्ति, सम्भाषणमपि संविभागमध्ये कुर्वन्ति, आज्ञामपि वरप्रदानं मन्यन्ते, स्पर्शमपि पावनमाकलयन्ति। मिथ्यामाहात्म्यगर्वनिर्भराश्च न प्रणमन्ति देवताभ्यः, न**

**पूजयन्ति द्विजातीन्, न मानयन्ति मान्यान्, नार्च्चयन्त्यर्च्चनीयान्, नाभिवादयन्त्यभिवादनार्हान्, नाभ्युत्तिष्ठन्ति गुरून्। अनर्थकायासान्तरितविषयोपभोगसुखमित्युपहसन्ति विद्वज्जनम्, जरावैक्लव्यप्रलपितमिति पश्यन्ति वृद्धजनोपदेशम्, आत्मप्रज्ञापरिभव इत्यसूयन्ति सचिवोपदेशाय, कुप्यन्ति हितवादिने।**

**व्याख्यानम् -**

अनुजीविना सेवकेन जनेन सेवकेन क्रियमाणां विधीयमानाम् आत्मविडम्बनां स्वस्मिन् अविद्यमानगुणारोपणरूपां वञ्चनाम् अभिनन्दन्ति साधुवादेन प्रशंसन्ति।

देवताध्यारोपणविप्रतारणासम्भूतसम्भावनोपहताः धूर्तैः देवताध्यारोपणं हरिहर्याद्यारोपणम् एव विप्रतारणा प्रवञ्चना तया सम्भूता समुत्पन्ना स्वस्मिन् सम्भावना हरिहर्यादिकल्पना तया उपहताः आच्छन्नाः ये तादृशाः विनाशमतयः सन्तः आत्मबाहुयुगलं स्वभुजयुग्मम् अन्तःप्रविष्टाऽपरभुजद्वयम् अन्तः अभ्यन्तरे प्रविष्टम् अपरम् अन्यद् भुजद्वयं बाहुयुगलं यस्य तादृशम् इव संभावयन्ति उत्प्रेक्षन्ते। बाहुयुगलं बाहुयुगलं चान्तः अस्ति कथनात् स्वस्य विष्णुरूपताम् आमनन्ति इति सिद्धम्।

ते नृपा इति योज्यम्। त्वगन्तरिततृतीयलोचनं त्वचा चर्मणा अन्तरितं व्यवहितं तृतीयं विषमं लोचनं नयनं यस्मिन् तादृशं स्वललाटं निजभालम् आशङ्कन्ते मन्यन्ते। महेश्वरस्य त्रिनेत्रत्वात् स्वस्मिन् महेश्वरत्वं सम्भावयन्तीति तात्पर्यम्।

दर्शनप्रदानं निजसाक्षात्कारम् अपि अनुग्रहं प्रसादं, गणयन्ति मन्यन्ते। दृष्टिपातम् चक्षुषा ईक्षणम् अपि उपकारपक्षे उपकारकत्वे स्थापयन्ति निदधति। सम्भाषणं आलपनम् अपि संविभागमध्ये दातव्यद्रव्यदानत्वेन कुर्वन्ति विदधति। आज्ञां स्वनिर्देशम् अपि वरप्रदानम् अभीष्टप्रदानं मन्यन्ते जानन्ति। स्पर्शं स्वस्य संश्लेषम् अपि पावनं पवित्रताकरणम् आकलयन्ति विचारयन्ति।

मिथ्यामाहात्म्यगर्वनिर्भराः मिथ्या असत्यं यत् माहात्म्यं महिमा तेन यो गर्वः अभिमानः मिथ्यामाहात्म्यगर्वः असत्यमहिमाभिमानः तेन निर्भराः परिपूर्णाः सन्तः देवताभ्यः न प्रणमन्ति नारायणादिदेवान् अनुकूलयितुं न स्तुवन्ति। ते द्विजातीन् ब्राह्मणान् न पूजयन्ति न अर्चयन्ति। ते मान्यान् सम्मानयोग्यान् न मानयन्ति श्वसुरादीनां सम्मानं कुर्वन्ति। ते अचर्नीयान् पूजनीयान् उपाध्यायप्रभृतीन् न अर्चयन्ति न पूजयन्ति। ते अभिवादार्हान् अभिवादनयोग्यान् पुरोहितादीन् न अभिवादयन्ति तेषां पादग्रहणं न कुर्वन्ति। ते गुरून् आचार्यादीन् न अभ्युत्तिष्ठन्ति अभ्युत्थानपूर्वकं सत्कारं न कुर्वन्ति।

इति अत एव अनर्थकायासान्तरितविषयोपभोगसुखम् अनर्थकः निष्फलः य आयासः परिश्रमः तेन निष्फलपरिश्रमेण विद्यार्जनपरिश्रमेण होमाद्यनुष्ठानेन वा अन्तरितं व्यवहितं विषयोपभोगसुखं कामिन्यादिभोगसुखं येन तादृशं भोगसुखरहितम् अनासक्तं विद्वज्जनम् विबुधम् उपहसन्ति जडत्वबुद्ध्या हासपात्रं मन्यन्ते। ते वृद्धजनोपदेशं स्थविरजनशिक्षां जरावैक्लब्यप्रलपितं जरया परिणतवयसा यद् वैक्लब्यं बुद्धिचाञ्चल्यम्, तेन प्रलपितं जल्पितम् इति एवं विचार्य पश्यन्ति जानन्ति। आत्मप्रज्ञापरिभवः आत्मप्रज्ञायाः स्वमतेः परिभवः पराजयः अयम् इति विचिन्त्य सचिवोपदेशाय प्रधानामात्यवचनाय

असूयन्ति गुणेषु दोषारोपपूर्वकं कुप्यन्ति। हितवादिने कल्याणभाषिणे कल्याणाय भणति यः तस्मै जनाय कुप्यन्ति क्रुध्यन्ति।

**सरलार्थः -**

किन्तु तथापि अनुचरैः कृतायामपि विडम्बनायां ते राजानः तान् एव सादरम् अभिनन्दन्ति। स्वस्य मनसि देवत्वसंस्थापनात् विवेकहीनत्वात् च प्रतारितानां तेषां राज्ञां या धारणा समुत्पन्ना, तया तेषां बुद्धिः नष्टा। अत एव "मम बाहुद्वयमध्ये इतोऽपि बाहुयुगलमेकं गुप्तं वर्तते" इति भावयन्तः आत्मनः विष्णुसदृशान् आमनन्ति। अपि च "स्वललाटदेशे अपरं नेत्रमेकं त्वचा आवृतम् अस्ति" इति शङ्कमानाः ते आत्मनः शिवसदृशान् मनन्ति। ते च स्वस्य दर्शनं तेषामेव अनुग्रहः इति भावयन्ति। स्वेषां दृष्टिपातम् अपि उपकाररूपेण गणयन्ति ते। केनापि सह सम्भाषणम् अपि ते दानरूपेण गृह्णन्ति। तेषाम् आदेशाः वरप्रदानतुल्याः इति चिन्तयन्ति। स्वेषां स्पर्शनं पवित्रतासम्पादकम् इति अवबोधः तेषाम्। मिथ्यामाहात्म्यस्य गर्वेण गर्वितास्ते राजानः देवान् न नमन्ति। ब्राह्मणानां पूजनं न कुर्वन्ति, मान्यानां कृते सम्मानं न प्रदर्शयन्ति, पूजनीयान् न पूजयन्ति, नमस्करणीयान् न नमस्कुर्वन्ति। किञ्च गुरून् दृष्ट्वापि न उत्तिष्ठन्ति। अपि च ते विद्योपार्जनादीनां परिश्रमः निरर्थकः इति भावयन्तः पण्डितानाम् उपहासं विदधति। वृद्धाः वार्धक्यकारणात् बुद्धेः अस्थिरतावशात् अधिकं प्रलपन्ति इति स्वीकुर्वाणाः ते राजानः वृद्धानाम् उपदेशं निष्प्रयोजनकम् इति भावयन्ति। अयं स्वबुद्धेः तिरस्कारः भवति इति मन्वानाः ते राजानः मन्त्रिणाम् उपदेशेषु दोषान् आविष्कुर्वन्ति। किञ्च, हितवाक्यं वदताम् उपरि क्रोधं प्रकटयन्ति।

**व्याकरणविमर्शः**

**क) समासः**

१. देवताध्यारोपणविप्रतारणासम्भूतसम्भावनोपहताः - देवता-ध्यारोपणं एव विप्रतारणा देवताध्यारोपणप्रतारणा इति कर्मधारयः। तया सम्भूता देवताध्यारोपणप्रतारणासम्भूता इति तृतीयातत्पुरुषः। तया उपहताः देवताध्यारोपणप्रतारणासम्भूतोपहताः इति तृतीयातत्पुरुषसमासः।

२. अन्तःप्रविष्टापरभुजद्वयम्- अन्तः प्रविष्टम् अन्तःप्रविष्टम् इति कर्मधारयः। अपरं भुजद्वयम् अपरभुजद्वयं इति कर्मधारयसमासः, अन्तःप्रविष्टम् अपरभुजद्वयम् अन्तःप्रविष्टापरभुजद्वयमिति कर्मधारयसमासः।

३. मिथ्यामाहात्म्यगर्वनिर्भराः- मिथ्या एव माहात्म्यं मिथ्यामाहात्म्यम् इति कर्मधारयः। तेन गर्वः मिथ्यामाहात्म्यगर्वः इति तृतीयातत्पुरुषः। तेन निर्भराः मिथ्यामाहात्म्यगर्वनिर्भराः इति तृतीयातत्पुरुषसमासः।

४. त्वगन्तरिततृतीयलोचनम् - त्वचा अन्तरितं त्वगन्तरितम् इति तृतीयातत्पुरुषः। त्वगन्तरितं तृतीयलोचनं यस्मिन् स त्वगन्तरिततृतीयलोचनः, तमिति बहुव्रीहिसमासः।

५. अनर्थकायासान्तरितविषयोपभोगसुखम् - अनर्थकः आयासः अनर्थकायासः इति कर्मधारयः। तेन अन्तरितम् अनर्थकायासान्तरितम् इति तृतीयातत्पुरुषः। अनर्थकायासान्तरितं विषयोपभोगसुखं येन स, तम् इति बहुव्रीहिसमासः।

६. जरावैक्लब्यप्रलपितम् - जरया वैक्लब्यं जरावैक्लब्यम् इति तृतीयातत्पुरुषः। तेन प्रलपितः जरावैक्लब्यप्रलपितः, तम् इति तृतीयातत्पुरुषसमासः।

**ख) सन्धिविच्छेदः**

१. अप्युपकारपक्षे - अपि उपकारपक्षे।

२. इत्युपहसन्ति - इति उपहसन्ति।

**अलङ्कारविमर्शः**

१. मनसेत्यस्मिन् वाक्ये बाहुयुगलस्य अन्तःप्रवेशक्रियाया उत्प्रेक्षणात् क्रियोत्प्रक्षालङ्कारः।

२. आज्ञामित्यस्मिन् वाक्ये इवाद्यभावात् वरप्रदानक्रियोत्प्रेक्षणात् प्रतीयमाना क्रियोत्प्रेक्षा।

## पाठगतप्रश्नाः- १

१. राजानः केषाम् अभिनन्दनं कुर्वन्ति?

२. केन राज्ञां बुद्धिः नश्यते?

३. ते राजानः स्वाम् आज्ञां किं मन्यन्ते?

४. अविवेकिनः राजानः कान् न अभिवादयन्ति?

५. राजा केषाम् उपरि क्रोधं प्रकटयन्ति

## १९.२) साम्प्रतं मूलपाठम् अवगच्छाम – १४

**सर्वथा तमभिनन्दन्ति, तमालपन्ति, तं पार्श्वे कुर्वन्ति, तं संवर्द्धयन्ति, तेन सह सुखमवतिष्ठन्ते, तस्मै ददति, तं मित्रतामुपनयन्ति, तस्य वचनं शृण्वन्ति, तत्र वर्षन्ति, तं बहु मन्यन्ते, तमाप्ततामापादयन्ति, योऽहर्निशमनवरतम् उपरचिताञ्जलिरधिदैवतमिव विगतान्यकर्त्तव्यः स्तौति, यो वा माहात्म्यमुद्भावयति। किंवा तेषां साम्प्रतम्, येषामतिनृशंसप्रायोपदेशनिर्घृणं कौटिल्यशास्त्रं प्रमाणम्, अभिचारक्रियाक्रूरैकप्रकृतयः पुरोधसो गुरवः, पराभिसन्धानपरा मन्त्रिण उपदेष्टारः, नरपतिसहस्रभुक्तोज्झितायां लक्ष्म्यामासक्तिः, मारणात्मकेषु शास्त्रेष्वभियोगः, सहजप्रेमार्द्रहृदयानुरक्ता भ्रातरः उच्छेद्याः।**

**व्याख्यानम् -**

तं पुरुषं सर्वथा सर्वप्रकारेण अभिनन्दति प्रशंसन्ति। सर्वथा इत्यस्य प्रत्येकं क्रियायामन्वयः। तं पुरुषं सर्वथा सर्वप्रकारेण आलपन्ति आभाषन्ते। तं पुरुषं सर्वथा पार्श्वे समीपे कुर्वन्ति रक्षन्ति। तं पुरुषं सर्वथा संवर्द्धयन्ति विविधसाहाय्येन संवृद्धिं प्रापयन्ति। तेन पुरुषेण सह सर्वथा समं सुखं सानन्दम् अवतिष्ठन्ते तिष्ठन्ति। तस्मै पुरुषाय सर्वथा ददाति वितरन्ति, धनादिकं इति योज्यम्। तं पुरुषं सर्वथा मित्रतां सख्यतां सख्यं वा उपनयन्ति प्रापयन्ति। तस्य जनस्य वचनं वचः सर्वथा शृण्वन्ति आकर्णयन्ति। तत्र तस्मिन्पुरुषे सर्वथा वर्षन्ति सततं धनानि यच्छन्ति। तं पुरुषं सर्वथा बहु अधिकं मन्यन्ते आद्रियन्ते, अत्युकष्टं विचारयन्ति इत्यर्थः। तं जनं सर्वथा आप्ततां यथार्थवक्तृभावम् आपादयन्ति प्रापयन्ति। यः पुरुषः अहर्निशम् अहोरात्रम् अनवरतं निरन्तरम् उपचिताञ्जलिः उपचितः कृतः अञ्जलिः करपुटः येन सः तथा च विगतान्यकर्तव्यः विगतम् अपगतम् अन्यत् अपरं कर्तव्यं करणीयं यस्य सः तादृशः सन् अधिदैवतम् आराध्यदेवम् इष्टदेवम् इव तं स्तौति नमति। यो वा चाटुकरी जनः माहात्म्यं राज्ञो महत्त्वम् उद्भावयति प्रकाशयति।

एवम्भूता ये नृपतयो भवन्ति तेषां सकलमेव अनुचितमिति कथयति - किंवा इति। तेषां नृपाणां किंवा साम्प्रतं युक्तं न्यायसङ्गतं भवितुं शक्नोति। न किमपि न्यायसङ्गतं तेषां नृपाणाम् इति भावः। "युक्ते द्वे साम्प्रतं स्थाने" इत्यमरवचनाद् असाम्प्रतम् इत्यस्य युक्तम् इत्यर्थः। येषां नृपाणाम् अतिनृशंसप्रायोपदेशनिर्घृणम् अतिनृशंसप्रायेण अतिक्रूरप्रचुरेण उपदेशेन शिक्षया निर्घृणं निष्करुणं कौटिल्यशास्त्रं चाणक्यप्रणीतम् अर्थशास्त्रं प्रमाणम्। अभिचारक्रियाक्रूरैकप्रकृतयः अभिचारक्रिया हिंसाकर्म श्येनयागादिकं तया क्रूरा कठोरा एका मुख्या प्रकृतिः स्वभावः येषां ते तादृशाः पुरोधसः पुरोहिताः गुरवः उपदेष्टारः भवन्ति, येषां नृपाणाम् इत्यत्र योज्यम्। येषां नृपाणाम् पराभिसन्धानपराः अन्यप्रतारणतत्पराः मन्त्रिणः अमात्याः उपदेष्टारः उपदेशकर्तारः भवन्ति। येषां नृपाणां नरपतिसहस्रभुक्तोज्झितायां नरपतिसहस्रेण राजसमूहेन प्राक् भुक्ता उपयुक्ता पश्चात् उज्झिता त्यक्ता तस्यां तादृश्यां लक्ष्म्यां राजश्रियाम् आसक्तिः प्रेमातिशयः भवति। येषां नृपाणां मारणात्मकेषु व्यापादनस्वरूपेषु शास्त्रेषु आयुधेषु अभियोगः आग्रहः अस्ति। येषां नृपाणां सहजप्रेमार्द्रहृदयानुरक्ताः सहजप्रेम्णा स्वाभाविकप्रणयेन आर्द्रं क्लिन्नं हृदयं चित्तं येषां ते सहजप्रमहृदयाः तादृशा अनुरक्ताः अनुरागयुक्ताः भ्रातरः सहोदराः उच्छेद्याः उच्छेत्तुं योग्याः उच्छेदनीयाः।

**सरलार्थः -**

एते राजानः सर्वथा तान् एव पार्श्वे स्थापयन्ति, तैः सह एव सुखेन निवसन्ति, तेभ्यः एव ददति, तैः सह मित्रतां कुर्वन्ति, तेषामेव वाक्यानि शृण्वन्ति, तेभ्यः एव सर्वदा धनं वितरन्ति, तेषामेव सम्माननां कुर्वन्ति, तान् एव विश्वसनीयान् मनन्ति - ये जनाः नक्तन्दिवं निरन्तरम् अञ्जलिबद्धाः सन्तः कर्तव्यानि कर्माणि अन्यत्र स्थापयित्वा देवतावत् राज्ञां स्तुतिं कुर्वन्ति अथवा तेषां माहात्म्यस्य कीर्तनं कुर्वन्ति।

तादृशानां राज्ञां किमपि कार्यं न्यायसङ्गतं भवति वा? येषां समीपे अत्यन्तनृशंसैः उपदेशैः परिपूर्णं तथा नितान्तनिर्दयं चाणक्यप्रणीतं नीतिशास्त्रम् एव प्रमाणं भवति। अभिचारक्रियायाः अनुष्ठानाय



नितान्तं क्रूरस्वभावविशिष्टाः पुरोहिताः येषां शिक्षकाः सन्ति। परप्रतारणापरायणः मन्त्रिगणः येषाम् उपदेष्टा भवति। सहस्रराजानः यां लक्ष्मीं यथेच्छं भुक्त्वा परित्यक्तवन्तः तां प्रति येषाम् आसक्तिः अस्ति। मारणोपदेशैः परिपूर्णे तन्त्रशास्त्रे येषाम् आग्रहः विद्यते। प्रकृत्या स्नेहवशात् सदयचित्तः अनुरक्तश्च भ्रातृगणः येषाम् उच्छेदपात्रं भवति।

**व्याकरणविमर्शः -**

**क) समासः -**

१. उपचिताञ्जलिः - उपचिता अञ्जलिः येन सः उपचिताञ्जलिः इति बहुव्रीहिसमासः।

२. विगतान्यकर्तव्यः- विगतम् अन्यत् कर्तव्यं यस्य सः विगतान्यकर्तव्यः इति बहुव्रीहिसमासः।

३. कौटिल्यशाास्त्रम्- कौटिलस्य शास्त्रं कौटिल्यशास्त्रम् इति षष्ठीतत्पुरुषसमासः।

**ख) सन्धिविच्छेदः**

१. शास्त्रेष्वभियोगः- शास्त्रेषु+अभियोगः।

**अलङ्कारविमर्शः**

१. सर्वथा इत्यादिना वाक्येन दुष्टानां राज्ञां सर्वकार्यायौक्तिकत्वनिरूपणकार्यं प्रति अनेकहेतूपन्यासात् समुच्चयालङ्कारः। तल्लक्षणं दर्पणे -

"समुच्चयोऽयमेकस्मिन् सति कार्यस्य साधके।

खले कपोतिकान्यायात् तत्करः स्यात् परोऽपि चेत्।।" इति।

**कोशः**

१. "युक्तं द्वे साम्प्रतं स्थाने" इत्यमरवचनात् साम्प्रतमित्यस्य युक्तम् इत्यर्थः।" इति विश्वः।

## पाठगतप्रश्नाः- २

६. मोहग्रस्ताः राजानः सर्वथा कं पार्श्वे कुर्वन्ति?

७. ते राजानः केन सह सुखम् अवतिष्ठन्ते?

८. अन्यायकारिणः राज्ञः उपदेष्टारः के?

## १९.३) साम्प्रतं मूलपाठम् अवगच्छाम – १५

**तदेवं प्रायातिकुटिल–कष्ट–चेष्टा–सहस्रदारुणे राज्यतन्त्रे, अस्मिन् महामोहकारिणि च यौवने, कुमार! तथा प्रयतेथाः यथा नोपहस्यसे जनैः, न निन्द्यसे साधुभिः, न धिक्क्रियसे गुरुभिः, नोपालभ्यसे सुहृद्भिः, न शोच्यसे विद्वद्भिः। यथा च न प्रकाश्यसे विटैः, न प्रहस्यसे कुशलैः, नास्वाद्यते भुजङ्गैः, नावलुप्यसे सेवकवृकैः, न वञ्च्यसे धूर्तैः, न प्रलोभ्यसे वनिताभिः,**

**न विडम्ब्यसे लक्ष्म्या, न नर्त्यसे मदेन, नोन्मत्तीक्रियसे मदनेन, नाक्षिप्यसे विषयैः, नावकृष्यसे रागेण, नापह्रियसे सुखेन। कामं भवान् प्रकृत्यैव धीरः, पित्रा च महता प्रयत्नेन समारोपितसंस्कारः, तरलहृदयमप्रतिबुद्धञ्च मदयन्ति धनानि, तथापि भवद्गुणसन्तोषो मामेवं मुखरीकृतवान्। इदमेव च पुनः पुनरभिधीयसे, विद्वांसमपि सचेतनमपि महासत्त्वमप्यभिजातमपि धीरमपि प्रयत्नवन्तमपि पुरुषमियं दुर्विनीता खलीकरोति लक्ष्मीरिति।**

**व्याख्यानम् -**

हे कुमार हे राज्यपुत्र चन्द्रापीड!, तत् तस्मात्कारणात्, एवं प्रायातिकुटिल-कष्ट-चेष्टा-सहस्रदारुणे प्रायाः एतादृशबाहुल्याः अतिकुटिलाः अतिशयवक्राः कष्टचेष्टाः दुःखदायिका ईहाः तासां सहस्रं प्रचुरसंख्या ततः दारुणे भीषणे, राज्यतन्त्रे राष्ट्रशासनव्यापारे, महामोहकारिणि अतिशायाज्ञानविधायिनि, यौवने तारुण्ये, तथा तेन प्रकारेण, प्रयतेथाः प्रयत्नं कुर्याः, यथा येन प्रकारेण, जनैः लोकैः न उपहस्यसे न उपहासपात्रं करिष्यसे, साधुभिः सज्जनैः न निन्द्यसे नो विगीयसे। गुरुभिः पूज्यजनैः न धिक्क्रियसे नो धिक्कारपात्रं विधीयसे। सुहृद्भिः मित्रैः बन्धुजनैः वा न उपलभ्यसे न तिरस्क्रियसे। विद्वद्भिः पण्डितैः, न शोच्यसे न शोकविषयीक्रियसे। यथा च, विटैः कामुकैः न प्रकाश्यसे स्वसमानतया न वर्ण्यसे। अर्थात् कामिजनैः सह मिलित्वा तत्पक्षपाती मा भव इति भावः। कुशलैः व्यवहारनिपुणैः न प्रहस्यसे व्यवहारकौशलाभावात् न उपहस्यसे। भुजङ्गैः धूर्तैः न आस्वाद्यसे न उपभुज्यसे द्रव्याऽपहरणद्वारेति योज्यम्। सेवकवृकैः सेवकाः परिचारकाः एव वृकाः हिंस्रप्राणिविशेषाः तैः न अवलुप्यसे गूढरूपेण प्रविश्य न विनाश्यसे। वनिताभिः स्त्रीभिः न प्रलोभ्यसे न आकृष्यसे। लक्ष्म्या श्रिया न बिडम्ब्यसे विडम्बनायुक्तः क्रियसे, न परित्यज्यस इत्यर्थः। मदेन आधिपत्यजनिताऽभिमानेन न नर्त्यसे नो नृत्यं कार्यसे। मदनेन कामेन न उन्मत्तीक्रियसे उन्माद इव आचर्यसे। विषयैः इन्द्रियार्थैः शब्दस्पर्शादिभिः न आक्षिप्यसे न आकृष्यसे। रागेण जरया कस्मिन्नपि जने विषये प्ररूढेन अनुरागेण वा न अवकृष्यसे न आकृष्यसे। सुखेन आनन्देन न अपह्रियसे न परित्यज्यसे।

भवान् त्वं प्रकृत्या स्वभावेन कामम् अत्यर्थं धीरः धैर्यसम्पन्नः असि। तत्राऽपि पित्रा जनकेन तारापीडेन महता प्रयत्नेन अत्यन्तचेष्टया समारोपितसंस्कारः समारोपितः संस्थापितः संस्कारः सर्वविषयज्ञानं यत्र तादृशः संस्थापितसर्वविषयबुद्धिः असि। यद्यपि - धनानि सम्पदः तरलहृदयं चञ्चलचित्तम् अप्रतिबुद्धं बोधरहितं च जनं मदयन्ति मत्तं कुर्वन्ति, तथापि एवं स्थितेऽपि भवद्गुणसन्तोषः भवद्गुणैः विद्याविनयशौर्यादिभिः यः सन्तोषः परितोषः स मां शुकनासं मुखरीकृतवान् वादितवान्।

इदम् एतत् पूर्वोक्तम् एव च पुनः पुनः भूयो भूयः अभिधीयसे कथ्यसे।

इयम् एषा दुर्विनीता विनयरहिता लक्ष्मीः श्रीः विद्वांसं पण्डितम् अपि सचेतनं बुद्धिमन्तम् अपि महासत्त्वम् अत्यन्तशक्तिसम्पन्नम् अपि अभिजातं कुलीनम् अपि धीरं धैर्ययुक्तम् अपि प्रयत्नवन्तम् उद्योगिनम् अपि पुरुषं जनं खलीकरोति अधमं करोति सन्मार्गाद् विच्युतं विदधाति।

### सरलार्थः -

अस्माद् एव कारणात् हे राजकुमार! चन्द्रपीड! एवम् अत्यन्तजटिले कष्टप्रदे कार्यबहुले भीषणे राजशासनरूपे कर्तव्ये तथा विवेकशून्यकारिणि यौवनसमये च तेन प्रकारेण कर्म त्वया करणीयं येन जनाः तव उपहासं न कुर्युः, सन्तः निन्दां न कुर्युः, आचार्याः न धिग्वचनं दद्युः, मित्राणि न तिरस्कुर्युः, पण्डिताः न शोचेयुः। किञ्च, यथा कामिजनाः स्वसमानतया न प्रकटयेयुः, कार्यनिपुणाः न उपहासं कुर्युः, लम्पटाः सम्पदां भोगं न कुर्युः, भृत्याः न धनं हरेयुः, धूर्ताः न वञ्चयेयुः, स्त्रियः स्वविलासेन न मुग्धं कुर्युः, श्रीः त्वां न परित्यजेत्, अभिमानः त्वां न ग्रसेत्, कन्दर्पः स्वबाणैः त्वां न हन्युः, विषयाः न अत्यन्तम् आकर्षयेयुः, कस्यापि वस्तुनः उत्कटभोगेच्छया त्वं प्रवर्तितः न भवेः, आनन्दः त्वां न परित्यजेत् तथा वर्तितव्यम्।

स्वभावेन एव त्वं धीरप्रकृतिविशिष्टः। पित्रा तारापीडेन भवति राजकुमारे अत्यन्तयत्नेन शुभसंस्काराः संस्थापिताः। सम्पत्तयो हि तारुण्यात् चञ्चलचित्तं राज्यशास्त्ररिपुविजयादिदुःखविषये अनभिज्ञं च जनं स्वभावत एव उन्मत्तं कुर्वन्ति। तथापि तव विद्याविनयशौर्यादिगुणैः जनिता तुष्टिः मां तोषयति। अतः भूयो भूयस्ते कथयामि यत्, गुणवन्तं, सावधानं, नितान्तशक्तिमन्तं, सद्वंशजं, धीरस्वभावम्, उद्योगयुक्तं जनम् अपि दुर्जनं करोति इयं दुश्चरित्रा लक्ष्मीः।

### व्याकरणविमर्शः -

**क) समासः -**

१. सेवकवृकैः - सेवकाः वृकाः सेवकवृकाः इति कर्मधारयसमासः, तैः सेवकवृकैः इति तृतीयातत्पुरुषसमासः।

२. प्रायातिकुटिल-कष्ट-चेष्टा-सहस्रदारुणे - प्रायाः अतिकुटिलाः प्रायातिकुटिलाः इति कर्मधारयः। प्रायातिकुटिलाः कष्टचेष्टाः प्रायातिकुटिलकष्टचेष्टाः इति कर्मधारयः। तासां सहस्रं प्रायातिकुटिलकष्टचेष्टासहस्रम् इति षष्ठीतत्पुरुषः। ततः दारुणं प्रायातिकुटिलकष्टचेष्टासहस्रदारुणम्, तस्मिन् इति पञ्चमीतत्पुरुषः।

३. महासत्त्वम् - महत् सत्त्वं यस्य स महासत्त्वः, तम् इति बहुव्रीहिः।

**ख) सन्धिविच्छेदः**

१. नास्वाद्यते - न आस्वाद्यते।

२. नोन्मत्तीक्रियसे- न उन्मत्तीक्रियसे।

३. नावकृष्यसे - न अवकृष्यसे।

४. पुनरभिधीयसे - पुनः अभिधीयसे।

### अलङ्कारविमर्शः

१. तदेवम् इत्यस्मिन् वाक्ये रूपकमलंकारः।

## पाठगतप्रश्नाः- ३

९. कीदृशे राज्यतन्त्रे राजा प्रलुब्धो न भवेत्?

१०. शुकनासनये राजकुमारः चन्द्रापीडः कीदृशः?

११. शुकनासमते कैः राजकुमारः नैव निन्द्यः?

१२. राजकुमारे चन्द्रापीडे संस्काराः केन आरोपिताः?

१३. राजकुमारस्य गुणाः कं मुखरीकृतवन्तः?

१४. कया सज्जनः दुर्जनायते?

## १९.४) साम्प्रतं मूलपाठम् अवगच्छाम – १६

**सर्वथा कल्याणैः पित्रा क्रियमाणमनुभवतु भवान् नवयौवराज्याभिषेकमङ्गलम्, कुलक्रमागतामुद्वह पूर्वपुरुषैरूढां धुरम्, अवनमय द्विषतां शिरांसि, उन्नमय स्वबन्धुवर्गम्। अभिषेकानन्तरञ्च प्रारब्धदिग्विजयः परिभ्रमन् विजितामपि तव पित्रा सप्तद्वीपभूषणां पुनर्विजयस्व वसुन्धराम्। अयञ्च ते कालः प्रतापमारोपयितुम्। आरूढप्रतापो हि राजा त्रैलोक्यदर्शीव सिद्धादेशो भवति' इत्येतावदभिधायोपशशाम।**

**व्याख्यानम् -**

भवान् त्वं, सर्वथा सर्वप्रकारेण, पित्रा जनकेन, कल्याणैः नानाविघमङ्गलैः सह, क्रियमाणं विधीयमानं, नवयौवराज्याभिषेकमङ्गलम् नवः नूतनः यो यौवराज्याभिषेकः युवराजपदप्रतिष्ठा, तदेव, यत् मङ्गलं कल्याणं, तत्, अनुभवतु अनुभवविषयीकरोतु। कुलक्रमागतां वंशपरम्परया सम्प्राप्तां, पूर्वपुरुषैः पूर्वजनैः, ऊढां धृतां, धुरं राज्यशासनभारम्, उद्वह धारय। द्विषतां शत्रूणां, शिरांसि मस्तकान् अवनमय अवनतानि कुरु। बन्धुवर्गम् स्वज्ञातिसमुदायम्, उन्नमय सत्कारादिभिः उन्नतं कुरु।

अभिषेकानन्तरं च यौवनराज्याऽभिषेकात् परम्, प्रारब्धदिग्विजयः प्रारब्धः उपक्रान्तः दिग्विजयः येन स उपक्रान्तविजयः, परिभ्रमन् परिभ्रमणं कुर्वन्, तव पित्रा भवतः जनकेन राज्ञा तारापीडेन, विजितां स्वायत्तीकृताम्, अपि, सप्तद्वीपभूषणां सप्तद्वीपाः भूषणानि यस्याः तां जम्बुप्रभृतिदीपालङ्काराम्, तां वसुन्धरां पृथिवीं, पुनः भूयः, विजयस्व स्वायत्तीकुरु।

प्रतापं कोषदण्डजं तेजः, आरोपयितुं शत्रुषु प्रवर्तयितुम् ते तव अयम् एष कालः समयः।

आरूढः आरोहणविषयीकृतः, प्रतापः कोषदण्डजं तेजः, येन सः, तादृशो राजा भूपः नृपः वा, त्रैलोक्यदर्शी त्रिलोकद्रष्टा योगी इव, सिद्धादेशः सिद्ध आदेशो यस्य सः अप्रतिहताज्ञः सिद्धः सफलः, भवति विद्यते। इति, एतावत् एतत्परिमाणम्, अभिधाय उक्त्वा, उपशशाम उपशान्तः बभूव विरतः अभवत्।

**सरलार्थः -**

भवान् मङ्गलैः सह पित्रा विधीयमानं युवराजपदाभिषेकस्य सुखम् अनुभवतु, परम्परया प्राप्तं पूर्वपुरुषैः धृतञ्च राज्यशासनस्य भारं च उद्वहतु, शत्रूणां शिरांसि अधः करोतु, स्वजनसमुदायञ्च उन्नमयतु। अभिषेकानन्तरं भवतः पित्रा जितां जम्बुप्रभृतिसप्तद्वीपैः भूषितां वसुमतीं दिग्विजयाय बहिः गच्छन् भवान् पुनः स्वायत्तीकरोतु। अयमेव रिपुषु पराक्रमप्रदर्शनस्य कालः। शत्रुषु राज्ञः प्रतापे उत्पन्ने सति तस्य आदेशः सर्वज्ञः इव अप्रतिहतः भवति इति एतावत्पर्यन्तम् उक्त्वैव शुकनाशः विरतः अभूत्।

**व्याकरणविमर्शः -**

**क) समासः -**

१. नवयौवराज्याभिषेकमङ्गलम्- नवं यौवराज्यं नवयौवराज्यमिति कर्मधारयसमासः, तस्मिन् अभिषेकः नवयौवराज्याभिषेकः इति सप्तमीतत्पुरुषसमासः, तस्य मङ्गलम् नवयौवराज्याभिषेकमङ्गलम् इति षष्ठीतत्पुरुषसमासः।

२. स्वबन्धुवर्गम्- स्वस्य बन्धुः स्वबन्धुः इति षष्ठीतत्पुरुषसमासः, स्वबन्धोः गर्वः स्वबन्धुगर्वः इति षष्ठीतत्पुरुषसमासः, तं स्वबन्धुवर्गम्।

३. सप्तद्वीपभूषणां - सप्त द्वीपानि सप्तद्वीपानि इति कर्मधारयसमासः, सप्तद्वीपानि एव भूषणं यस्याः सा सप्तद्वीपभूषणा इति बहुव्रीहिसमासः, तां सप्तद्वीपभूषणाम्।

४. आरूढप्रतापः- आरूढः प्रतापः येन सः आरूढप्रतापः इति बहुव्रीहिसमासः।

**ख) सन्धिविच्छेदः**

१. इत्येतावत् - इति एतावत्।

२. अभिधायोपशशाम - अभिधाय उपशशाम।

**कोशः**

१. "स प्रतापः प्रभावश्च यत्तेजः कोषदण्डजम्।" इत्यमरवचनात् प्रतापः, प्रभावः, कोषदण्डजं तेजः इत्येते पर्यायाः।

## पाठगतप्रश्नाः-४

१५. मन्त्रिमते राजकुमारः किम् अनुभवेत्।

१६. राजकुमारः मन्त्रीच्छानुसारं किम् अवनमयेत्।

१७. राजकुमारः कस्याः पुनर्विजयं कुर्यात्।

१८. कीदृशस्य राज्ञः आदेशः देववत् सिद्धो भवति।

## १९.५) साम्प्रतं मूलपाठम् अवगच्छाम – १७

**उपशान्तवचसि शुकनासे चन्द्रापीडस्ताभिरुपदेशवाग्भिः प्रक्षालित इव, उन्मीलित इव, स्वच्छीकृत इव, निर्मृष्ट इव, अभिषिक्त इव, अभिलिप्त इव, अलङ्कृत इव, पवित्रीकृत इव, उद्भासित इव, प्रीतहृदयो मुहूर्त्तं स्थित्वा स्वभवनमाजगाम।**

**व्याख्यानम् -**

शुकनासे प्रधानाऽमात्ये उपशान्तवचसि उपशान्तं वचः यस्य तस्मिन् निवृत्तवचने तूष्णीम्भावम् आपन्ने सति चन्द्रापीडः राजपुत्रः ताभिः पूर्वप्रोक्ताभिः उपदेशवाग्भिः शिक्षावचनैः प्रक्षालितः धौत इव, उन्मीलितः विकसितः इव, स्वच्छीकृतः अतिशयेन निर्मलीकृतः इव, निर्मृष्टः संस्कृत इव, अभिषिक्तः स्नातः इव, अभिलिप्तः उद्दीपितः इव, अलङ्कृतः सज्जीकृत इव, पवित्रीकृतः पवित्रतां प्राप्त इव, उद्भासितः समुज्ज्वलीकृत इव, प्रीतहृदयः प्रसन्नचेताः सन्, मुहूर्तं कञ्चित्कालं, स्थित्वा अवस्थानं कृत्वा, स्वभवनं निजप्रासादम्, आजगाम आगतः।

**सरलार्थः -**

शुकनासस्य उपदेशानन्तरं चन्द्रापीडः तैः विमलैः उपदेशवचनैः धौत इव, प्रबोधित इव, मसृणीकृत इव, अभिषिक्त इव, अभिलिप्त इव, भूषित इव, पवित्रीकृत इव, उज्ज्वलीकृत इव सञ्जातः इत्यनुभूय प्रीतहृदयः सन् क्षणम् अवस्थाय निजगृहं प्रति आगतवान्।

**व्याकरणविमर्शः -**

**समासः -**

१. उपशान्तवचसि - उपशान्तं वचः यस्य स उपशान्तवचाः, तस्मिन् इति बहुव्रीहिसमासः।
२. प्रीतहृदयः- प्रीतं हृदयं यस्य स प्रीतहृदयः इति बहुव्रीहिसमासः।
३. स्वभवनम्- स्वस्य भवनं स्वभवनम् इति षष्ठीतत्पुरुषसमासः।

**सन्धिविच्छेदः**

१. चन्द्रापीडस्ताभिरुपदेशवाग्भिः- चन्द्रापीडः ताभिः उपदेशवाग्भिः।

**अलङ्कारविमर्शः**

१. उपशान्तेति वाक्ये नवानामुत्प्रेक्षाणामनपेक्षया स्थितेः संसृष्टिरलङ्कारः। तल्लक्षणं तावद् विद्यानाथेनोक्तम् -

"तिलतण्डुलसंश्लेषन्यायाद् यत्र परस्परम्।

संश्लिष्येयुरलङ्काराः सा संसृष्टिर्निगद्यते।।" इति।

## पाठगतप्रश्नाः- ५

१९. राजकुमारः चन्द्रापीडः कदा गृहं प्रत्याजगाम?

२०. राजकुमारः केन पवित्रीकृतः इव गृहं प्रत्यागतः?

२१. चन्द्रापीडः कथं गृहं प्रत्यागतः?

२२. स च राजकुमारः कि कृत्वा गृहं प्रत्याजगाम?

## पाठसारः

मृषास्तुतिवचनैः विह्वलाः राजानः अनुचरैः कृतायामपि विडम्बनायां धूर्तान् तान् एव अन्धवत् सादरम् अभिनन्दन्ति। आत्मानं देवं मन्वानाः ते अविवेकिनः सञ्जाताः, अतः तेषां राज्ञां मनसि या धारणा समुत्पन्ना, तया तेषां बुद्धिः नष्टा। अत एव "मम बाहुद्वयमध्ये इतोऽपि बाहुयुगलमेकं गुप्तं वर्तते" इति भावयन्तः आत्मनः विष्णुसदृशान् आमनन्ति। अपि च "स्वललाटदेशे अपरं नेत्रमेकं त्वचा आवृतम् अस्ति" इति शङ्कमानाः ते स्वयं शिवसदृशान् मनन्ति। ते च तेषां दर्शनं तेषामेव अनुग्रहः इति भावयन्ति। स्वेषां दृष्टिपातम् अपि उपकाररूपेण गणयन्ति ते। केनापि सह सम्भाषणम् अपि दानवत्, तेषाम् आदेशाः वरप्रदानतुल्याः इति चिन्तयन्ति। स्वेषां स्पर्शनं पवित्रतासम्पादकम् इति अवबोधः तेषाम्। मिथ्यामाहात्म्यस्य गर्वेण गर्वितास्ते राजानः देवान् न नमन्ति, ब्राह्मणानां पूजनं न कुर्वन्ति, मान्यानां कृते सम्मानं न प्रदर्शयन्ति, पूजनीयान् न पूजयन्ति, नमस्करणीयान् न नमस्कुर्वन्ति। किञ्च गुरून् दृष्ट्वापि न उत्तिष्ठन्ति। अपि च ते विद्योपार्जनादीनां परिश्रमः निरर्थकः इति भावयन्तः पण्डितानाम् उपहासं कुर्वन्ति। वृद्धाः वार्धक्यकारणात् बुद्धेः अस्थिरतावशात् अधिकं प्रलपन्ति इति स्वीकुर्वाणाः ते राजानः वृद्धानाम् उपदेशं निष्प्रयोजनकम् इति भावयन्ति। स्वबुद्धेः तिरस्कारः भवति इति मन्वानाः ते राजानः मन्त्रिणाम् उपदेशेषु दोषान् आविष्कुर्वन्ति। किञ्च, हितवाक्यं वदताम् उपरि क्रोधं प्रकटयन्ति।

एते राजानः सर्वथा तान् एव पार्श्वे स्थापयन्ति, तैः सह एव सुखेन निवसन्ति, तेभ्यः एव ददति, तैः सह मित्रतां कुर्वन्ति, तेषामेव वाक्यानि शृण्वन्ति, तेभ्यः एव सर्वदा धनं वितरन्ति, तेषामेव सम्माननं कुर्वन्ति, तान् एव विश्वसनीयान् मनन्ति - ये जनाः नक्तन्दिवं निरन्तरम् अञ्जलिबद्धाः सन्तः कर्तव्यानि कर्माणि अन्यत्र स्थापयित्वा देवतावत् राज्ञां स्तुतिं कुर्वन्ति अथवा तेषां माहात्म्यस्य कीर्तनं कुर्वन्ति। येषां समीपे अत्यन्तनृशंसैः उपदेशैः परिपूर्णं तथा नितान्तनिर्दयं चाणक्यप्रणीतं नीतिशास्त्रम् एव प्रमाणं भवति। अभिचारक्रियायाः अनुष्ठानाय नितान्तं क्रूरस्वभावविशिष्टाः पुरोहिताः येषां शिक्षकाः सन्ति। परप्रतारणापरायणः मन्त्रिगणः येषाम् उपदेष्टा भवति। सहस्रराजानः यां लक्ष्मीं यथेच्छं भुक्त्वा परित्यक्तवन्तः तां प्रति येषाम् आसक्तिः अस्ति। मारणोपदेशैः परिपूर्णे तन्त्रशास्त्रे येषाम् आग्रहः विद्यते।

प्रकृत्या स्नेहवशात् सदयचित्तः अनुरक्तश्च भ्रतृगणः येषाम् उच्छेदपात्रं भवति। तादृशानां राज्ञां किमपि कार्यं न्यायसङ्गतं नैव भवति।

अस्माद् एव कारणात् शुकनासः राजकुमारं चन्द्रपीडं प्रति कथयति यत् – एवं कष्टप्रदे भयङ्करे राजशासनकर्तव्ये तथा विवेकहारिणि यौवनसमये च तेन प्रकारेण कर्म त्वया करणीयं येन जनाः तव उपहासं न कुर्युः, सन्तः निन्दां न कुर्युः, आचार्याः न धिग्वचनं दद्युः, मित्राणि न तिरस्कुर्युः, पण्डिताः न शोचेयुः। किञ्च, यथा कामिजनाः स्वसमानतया न प्रकटयेयुः, कार्यनिपुणाः न उपहासं कुर्युः, लम्पटाः सम्पदां भोगं न कुर्युः, भृत्याः न धनं हरेयुः, धूर्ताः न वञ्चयेयुः, स्त्रियः स्वविलासेन न मुग्धं कुर्युः, श्रीः त्वां न परित्यजेत्, अभिमानः त्वां न ग्रसेत्, कन्दर्पः स्वबाणैः त्वां न हन्युः, विषयाः न अत्यन्तम् आकर्षयेयुः, कस्यापि वस्तुनः उत्कटभोगेच्छया त्वं प्रवर्तितः न भवेः, आनन्दः त्वां न परित्यजेत् तथा वर्तितव्यम्। स्वभावेन एव त्वं धीरप्रकृतिविशिष्टः। पित्रा तारापीडेन भवति राजकुमारे अत्यन्तयत्नेन शुभसंस्काराः संस्थापिताः। सम्पत्तयो हि स्वभाविकतया चञ्चलचित्तं राज्यशासने अनभिज्ञं च जनम् एव उन्मत्तं कुर्वन्ति। तथापि तव विद्याविनयशौर्यादिगुणैः जनिता तुष्टिः मां तोषयति। अतः भूयो भूयस्ते कथयामि यत्, गुणवन्तं, सावधानं, नितान्तशक्तिमन्तं, सद्वंशजं, धीरस्वभावम्, उद्योगयुक्तं जनम् अपि दुर्जनं करोति इयं दुश्चरित्रा लक्ष्मीः।

शुकनासस्य मतानुसारं मङ्गलैः सह पित्रा तारापीडेन विधीयमानं युवराजपदाभिषेकस्य सुखं चन्द्रापीडः अनुभवेत्, परम्परया प्राप्तं पूर्वपुरुषैः धृतञ्च राज्यशासनस्य भारं च उद्वहेत्, शत्रूणां शिरांसि अधः कुर्यात्, स्वजनसमुदायञ्च उन्नमयेत्। अभिषेकानन्तरं तस्य पित्रा जितां जम्बुप्रभृतिसप्तद्वीपैः भूषितां वसुमतीं दिग्विजयाय बहिः गच्छन् चन्द्रापीडः पुनः स्वायत्तीकुर्यात्। अयमेव रिपुषु पराक्रमप्रदर्शनस्य कालः। तथाहि शत्रुषु राज्ञः प्रतापे उत्पन्ने सति तस्य आदेशः सर्वज्ञः इव अप्रतिहतः भवति इति एतावत्पर्यन्तम् उक्त्वैव शुकनाशः विरतः अभूत्।

शुकनासस्य उपदेशानन्तरं चन्द्रापीडः तैः विमलैः उपदेशवचनैः परिष्कृतः इव, प्रबोधितः इव, मसृणीकृतः इव, अभिषिक्तः इव, अभिलिप्तः इव, भूषितःइव,पवित्रीकृत इव, उज्ज्वलीकृत इव च सञ्जातः इत्यनुभूय प्रीतहृदयः सन् निजगृहं प्रत्यागतवान्।

## पाठान्तप्रश्नाः

१. कस्माद् हेतोः राजानः प्रवञ्चकानामेव सादरम् अभिनन्दन्ति इति वर्णयत।

२. विवेकहीनाः सन्तः राजानः किं किं कुर्वन्ति सर्वं पाठदिशा वर्णयत।

३. मिथ्यामोहग्रस्ताः राजानः कान् कान् पार्श्वे स्थापयन्ति।

४. कीदृशानां राज्ञां कार्यं न्यायसङ्गतं न भवति।

५. शुकनासस्य मते राजकुमारेण कथम् आचरणीयम्।

६. कदा राज्ञः आदेशाः सर्वज्ञवत् अप्रतिहताः भवन्ति।

## पाठगतप्रश्नोत्तराणि

१. राजानः आत्मविडम्बनां कृतवताम् अभिनन्दनं कुर्वन्ति।

२. स्वस्मिन् देवत्वारोपधारणया दुष्टानां राज्ञां बुद्धिः नश्यते।

३. अविवेकिनः राजानः स्वाम् आज्ञां वरप्रदानं मन्यन्ते।

४. अविवेकिनः राजानः अभिवादार्हान् न अभिवादयन्ति।

५. अविवेकी राजा हितवादिनाम् उपरि क्रोधं प्रकटयति।

६. मोहग्रस्ताः राजानः सर्वथा यः अहर्निशम् अञ्जलिबद्धः सन् स्तौति तं पार्श्वे कुर्वन्ति।

७. ते राजानः यः तस्य माहात्म्यम् उद्भावयति तेन सह सुखम् अवतिष्ठन्ते।

८. अन्यायकारिणः राज्ञः उपदेष्टारः पराभिसन्धानपराः मन्त्रिणः।

९. अत्यन्तभयङ्करकष्टप्रदे कुटिले च राज्यतन्त्रे राजा प्रलुब्धो न भवेत्।

१०. शुकनासनये राजकुमारः चन्द्रापीडः प्रकृत्या एव धीरः।

११. शुकनासमते साधुभिः राजकुमारः नैव निन्द्यः।

१२. राजकुमारे चन्द्रापीडे संस्काराः पित्रा तारापीडेन आरोपिताः।

१३. राजकुमारस्य गुणाः मन्त्रिणं शुकनासं मुखरीकृतवन्तः।

१४. दुर्विनीतया लक्ष्म्या सज्जनः दुर्जनायते।

१५. मन्त्रिमते राजकुमारः राज्याभिषेकमङ्गलम् अनुभवेत्।

१६. राजकुमारः मन्त्रीच्छानुसारं द्विषतां शिरांसि अवनमयेत्।

१७. राजकुमारः सप्तद्वीपभूषणायाः वसुमत्याः पुनर्विजयं कुर्यात्।

१८. आरूढप्रतापस्य राज्ञः आदेशः देववत् सिद्धो भवति।

१९. राजकुमारः चन्द्रापीडः शुकनासस्य उपदेशाद् अनन्तरं गृहं प्रत्याजगाम।

२०. राजकुमारः निर्मलाभिः उपदेशवाग्भिः पवित्रीकृतः इव गृहं प्रत्यागतः।

२१. चन्द्रापीडः प्रीतहृदयः सन् गृहं प्रत्यागतः।

२२. स च राजकुमारः मुहूर्तं स्थित्वा गृहं प्रत्याजगाम।

## योग्यताविस्तारः

### १९.६) कविपरिचयः

**भूमिका** - महाकविः बाणभट्टः गद्यकाव्यजगतः चक्रवर्ती । पद्यं वद्यं गद्यं हृद्यम् इति उक्तिः बाणस्य गद्यकाव्यस्य रचनादनन्तरमेव भणितिपदवीम् अधिगता इति भाति। कविराजः इति नामा



गद्यकविरेकः वदति यत् – "सुबन्धुर्बाणभट्टश्च कविराज इति त्रयः" इति श्लेषार्थचमत्कारे वयं त्रय एव गद्यकवयः इति। बाणभट्टस्य कवितासामर्थ्यविचारे गोवर्धनाचार्यस्य प्रशंसावचनम् एवमस्ति –

"जाता शिखण्डिनी प्राक् यथा शिखण्डी तथाऽवगच्छामि।

प्रागल्भ्यमधिकमाप्तुं वाणी बाणे बभूवे"ति॥

महाकविः जयदेवः ब्रूते, यथा –

"हर्षो हर्षो हृदयवसतिः पञ्चबाणस्तु बाणः" इति।

**देशकालौ** - महाकविना स्वेतिवृत्तं स्वविरचिते हर्षचरिते विस्तरशः प्रतिपादितम्। हिरण्यबाह्वपरनामिकायाः शोणानद्याः पश्चिमतटे स्थितः प्रीतिकूटाख्यः ग्रामः बाणस्य जन्मभूमिः आसीत्। सम्प्रति स्थानमिदं बिहारराज्यस्य आरामण्डलान्तर्गतम्। बाणभट्टस्य वंशः विद्याभ्यासे धर्माचरणे च अतीव सुप्रसिद्ध आसीत्। वात्स्यायनवंशजः चित्रभानुः बाणभट्टस्य पिता माता च राज्यदेवी। उक्तिरेवमस्ति लभ्यते - "अलभत च चित्रभानुस्तेषां मध्ये राजदेव्यभिधानायां ब्राह्मण्यां बाणमात्मजम्।" इति। अतोऽयं ब्राह्मण आसीदिति निश्चप्रचम्। बाणस्य जन्मस्थानस्य समीप एव यष्टिगृहम् नाम ग्रामः, ततोऽपि अनतिदूरे श्रीहर्षवर्धनस्य द्वितीयशिलादित्यस्य राज्यम् श्रीकण्ठदेशः आसीत्। हर्षवर्धनशिलादित्यस्य कालः ६०६-६४७ ख्रिष्टाब्दाभ्यन्तरे इति हर्षचरिते उल्लिखितम् । अतः बाणभट्टोऽपि सप्तमशतकस्य कविः इति स्पष्टम्।

**जीवनचरितम्** - शैशवे एव बाणस्य मातृवियोगः अभवत्। ततः पिता एव बालस्य रक्षणपोषणभारम् ऊढवान्। ततः समुचिते वयसि तस्य विधिवत् उपनयनादिसंस्काराः सम्पन्नाः। तेन च जनकात् सकलविद्या अधिगता। बाणस्य चतुर्दशे वयसि पितापि दिवं गतः। तदा खिन्नः बाणः मित्रैः सह ग्रामाद् ग्रामान्तरं पर्यटन् अन्तिमे प्रीतिकूटं प्रति गतः। तत्र एव तस्य कवित्वविकाशः संवृत्तः। चन्द्रसेनमातृषेणौ तस्य भ्रातरौ इति प्रसिद्धिः। ततः कवित्वप्रतिभा तस्य कर्णाकर्णिकया बहुत्र प्रसृता। तदा तत्कवित्वप्रतिभां श्रुत्वा चक्रवर्तिनः हर्षवर्धनस्य मातुलः चित्रभानोः मित्रं च कृष्णराजः मुग्धः। तस्य कृपया स हर्षवर्धनस्य आस्थानपण्डितमण्डल्यां स्थानं लब्धवान्। ततः किञ्चित्कालानन्तरं बाणभट्टः हर्षवर्धनस्य अतीव प्रियमित्रम् अभवत्। तदा बाणः हर्षवर्धनस्य जीवनचरितम् आश्रित्य हर्षचरितम् इति नामकं ग्रन्थं रचयामास। भूषणभट्टः बाणभट्टस्य पुत्रः।

**कविकृतयः** - महाकविः बाणभट्टः गद्यकाव्यद्वयविनिर्माणेन सहृदयानां हृदये अमरं स्थानं प्राप्तवान्। अत एव काव्यरसिकानाम् अयम् उद्घोषः "बाणोच्छिष्टम् जगत् सर्वम्" इति। तस्य गद्यकाव्यद्वयं तावत् हर्षचरितम् कादम्बरी चेति।

तत्र हर्षचरितम् इति आख्यायिकाग्रन्थः। वास्तविकम् इतिहासम् आश्रित्य अयं ग्रन्थः बाणभट्टेन विरचितः। एतस्य ग्रन्थस्य आख्यायिकात्वं स्वयमेव कथयति - “करोम्याख्यायिकाम्भोधौ जिह्वाप्लवनचापलम्” इति। नेदं साधारणं चरितपुस्तकमपि तु सरसं काव्यम्। “ओजःसमासभूयस्त्वम् एतद् गद्यस्य जीवितम्” इति गद्यविषये आलङ्कारिकाणामुक्तिः। समेषामेव आलङ्कारिकाणां मते



ओजःसमासभूयोगद्यकाव्यसंरचने मूर्धन्यो बाणः। तस्य च ओजःसमासबहुलं गद्यकाव्यं भवति हर्षचरितम्। अस्मिन् ग्रन्थे अष्टौ उच्छ्वासाः सन्ति। तेषु आद्ये उच्छ्वासत्रये बाणः स्वीयां कथां लिखितवान्। तत्रैव तस्य वंशपरिचयादिकं निबद्धम्। चतुर्थोच्छ्वासात् समाप्तिपर्यन्तं राज्ञः हर्षवर्धनस्य चरितम् उपन्यस्तम्।

बाणभट्टस्य द्वितीयं प्रसिद्धं गद्यकाव्यं भवति कादम्बरी। कादम्बरी स्वीयकल्पनया रचितः कथाग्रन्थ इति बाणस्य स्वीयया "धिया निबद्धेयमतिद्वयी कथा" इत्युक्त्या एव ज्ञायते। कादम्बर्यामुक्ता कथा गुणाढ्यविरचिताया बृहत्कथायाः संगृहीता। बृहत्कथातः कथामादाय स्वकीयकवित्ववैभव्येन काव्यकलानैपुण्येन कथायां वैशिष्ट्यम् उत्पाद्य कादम्बरीं निबद्धवान् महाकविर्बाणः। अत एव रसिकजनोक्तिः - "कादम्बरीरसज्ञानाम् आहारोऽपि न रोचते" इति। कादम्बरी स्ववैभवेन अन्वर्थनाम्नी कादम्बरी एव सम्पन्ना। कादम्बरी नाम मदिरा। मदिरा यथा मदमुत्पादयति तथैव इयं कथा अपि जनयति काव्यास्वादमदम्। बाणस्य कादम्बर्याः महती प्रशंसा विद्वद्भिः आलङ्कारिकैः कृता। यथा तत्र राजशेखरः –

"सहर्षचरितारब्धाद्भुतकादम्बरीकथा।
बाणस्य वाण्यनार्येव स्वच्छन्दा भ्रमति क्षितौ।।" इति। तथैव कीर्तिकौमुदीकारः भणति –
"युक्तं कादम्बरी श्रुत्वा कवयो मौनमाश्रिताः।
बाणध्वनावनध्यायो भवतीति स्मृतिर्यतः।।" इति।

एवं समासतः कविपरिचयः प्रस्तुतः।

## १९.७) विशेषज्ञानाय अध्येतव्या ग्रन्थाः

बाणभट्टप्रणीतोऽयं कादम्बरीकथाग्रन्थः भारतीयसंस्कृतसाहित्ये अत्युत्कृष्टं पदम् अलङ्करोति। बहुभिः परमादरेण श्लाघ्यमानः अयं ग्रन्थः। अत्र शुकनासोपदेशः इत्यंशः अध्येयः अस्माकम्। तत्र अध्येतारः यदि इतः अपि दृढं ज्ञानम् तर्हि अधोलिखितान् ग्रन्थान् द्रष्टुं शक्नुयुः -

- **कादम्बरी** - चन्द्रकलासंस्कृतहिन्दीव्याख्योपेता
  व्याख्याकारः - आचार्य शेषराजशर्मा रेग्मीः
  प्रकाशकः - चौखम्बा सुरभारती प्रकाशन, वाराणसी
- **कादम्बरी** - चन्द्रकलाविद्योतिनीव्याख्याद्वयोपेता
  व्याख्याकारः - पण्डित कृष्णमोहनशास्त्री
  प्रकाशकः - चौखम्बा संस्कृत संस्थान, वाराणसी
- **कादम्बरी** - (वङ्गभाषायाम्)
  सम्पादकः - श्रीनीरदवरणभट्टाचार्यः
  प्रकाशकः - संस्कृत पुस्तक भाण्डारः, कोलकाता

## १९.८) भाषाविस्तारः

शुकनासोपदेशः इत्यंशस्य पाठेन संस्कृतभाषायां ज्ञानवर्धनं निश्चप्रचम्। अध्येयांशस्य अध्ययनेन ज्ञानवर्धनस्य केचन उपायाः सामान्येन निर्दिश्यन्ते -

शुकनासोपदेश इति पाठ्यांशस्य अध्ययनेन भवान् -

१. संस्कृते गद्यसाहित्यरचनाकौशलं बोद्धुं शक्नोति।
२. नवीनपदानां तालिकानिर्माणं कर्तुं शक्नोति।
३. समासनामानि तत्प्रयोगकौशलं च ज्ञातुं शक्नोति।
४. नवीनधातूनां प्रकृतिप्रत्ययानां च प्रयोगं कोष्ठकं च कर्तुं शक्नोति।
५. नवीनपदानाम् अर्थानां च ज्ञानेन भाषासमृद्धिं कर्तुं शक्नोति।

## १९.९) भावविस्तारः

१. कथामिमां गद्यरूपेण पठितुं पाठयितुं च भवन्तः शक्नुवन्ति।
२. नाटकरूपेण इयं कथा प्रस्तोतुं शक्यते।
३. धनपिपासा मरणस्य बीजमित्युपदेशं मनसि संस्थाप्य जीवने प्रवर्तनीयम्।
४. आज्ञा गुरूणां ह्यविचारणीया।
५. गुरूणां सज्जनानां च सर्वदा सम्मानं विधेयम्।
६. गुरूणाम् आज्ञाम् उपदेशं च स्वीकृत्यैव कार्ये प्रवर्तनीयम्।
७. मन्त्रिणः शुकनासस्य उपदेशं मनसि निधाय जीवनपरिपालनेन जीवनं सुष्ठु स्यात्।
८. कदापि धनयौवनादिकम् आश्रित्य अहङ्कारः न करणीयः।

॥ इति नवदशः पाठः ॥